वैश्यजात्युचितः कालः परिग्रहीतव्यः एवञ्च ऋतोः प्रागपि अष्टमादूर्ध्वं क्रियमाणं वैवाहिकं कर्म गौणकालएवानुष्ठीयत इति स्पष्टं प्रतीयते नच 'परधर्मोभयावह' इति भगवदुक्त्या कथमन्यधर्म परिग्रहणं युक्तं भवेदिति वाच्यं आपत्कालेन्यधर्मस्वीकरणमदोषायेति शिष्टैरुपादिष्टत्वात् तथाहि 'जीवितात्ययमापन्नो योन्नमत्तियतस्ततः। आकाशमिव पङ्केन न स पापेन लिप्यते' (म-१०-१०४) इति इत्थं शास्त्रेषु गर्जत्सु यावद्रजोदर्शनं कन्यकानां विवाहस्य मुख्यः कालइति वदतो विमर्शकृतो वचनं न प्रमाणपदवीं कटाक्षयतीति स्पष्टं विदुषां।

(२) यच्चोक्तं ऋत्वनन्तरमपि वर्षत्रयं स्त्रीणां विवाहस्य गौणः काल इति तदानीमपि पित्रादीनां दानाधिकारो नापैतीति

अत्रोच्यते ऋतोः परमपि कन्यादाने पित्रादीनामधिकारो वर्षत्रयमस्तीत्यत्र विमर्शकृद्वचनमन्तरेण न किमपि प्रमाणान्तरमुपलभामहे न प्रमाणाभावमात्रं किन्तु विवाहात्पूर्वं ऋतुमत्याः कन्यायाः तत्पित्रादीनां तद्वोढुश्च महान् दोषश्च स्मर्यते तथाहि।

'पितुर्वेश्मनि या कन्या रजस्तु समुपस्पृशेत्।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥

माताचैव पिता चैव ज्येष्ठो भ्राता तथैव च।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥

उद्वहेद्यस्तु तां कन्यां ब्राह्मणो मदमोहितः।
असंभाष्योह्यपाङ्क्तेयस्सविप्रो वृषलीपतिः ॥इतिअंगिराः अ १८-६१

पितुर्वेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्यास्सा कन्या वृषळी स्मृता ॥ इति लघुशाता-
[तपः ६९।

रजस्वला च या कन्या यदि स्यादविवाहिता ।
वृषळी वार्षळेयस्यात् जातस्तस्यां स चैवहि ॥ आश्वलायनः प्र-
[२१-१ ।

पितुः प्रमादात्तु यदीह कन्या वयः प्रमाणं समतीत्य दीयते ।
सा हन्ति दातारमपीक्षमाणा कालातिरिक्ता गुरुदक्षिणेव ॥

प्रयच्छेन्नग्निकां कन्यां ऋतुकालभयात्पिता ।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥

यावच्च कन्यामृतवस्स्पृशन्ति कुलैस्समकामा मभियाच्यमानां ।
भ्रूणानि तावन्ति हतानि ताभ्यां मातापितृभ्यामिति धर्मवादः ॥
[अ. १७-६१इति वसिष्ठः ।

पितुर्गेहे तु या कन्या पश्यत्यसंस्कृता रजः ।
भ्रूणहत्या पितुस्तस्याः कन्या सा वृषळी स्मृता ॥
यस्तां विवाहयेत् कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषळीपतिः ॥
प्राप्ते च दशमे वर्षे कन्यां यो न प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितम् ॥
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च । (अ-१)
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलामिति । यमः ।

यावन्न लज्जते कन्या यावत्क्रीडति पांसुषु ।
यावत्तिष्ठति गोमार्गे तावत्कन्यां विवाहयेत् ।
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥
तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत् । ६९
विवाहो ह्यष्टवर्षायाः कन्यायास्तु प्रशस्यते ॥ इति संवर्तः
दद्यात् गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलां ॥ इति ४-१-
१२ बौधायनः ।
पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्यास्सा नारी वृषली स्मृता ॥
यस्तां विवाहयेत् कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो-ह्यपाङ्क्तेयस्स विप्रो वृषलीपतिः ॥ इति बृहस्पतिः ।
अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ । इति याज्ञवल्क्यः।
यावन्तश्चर्तवस्तस्यास्समतीयुः पतिं विना ।
तावत्यो भ्रूणहत्यास्स्युः तस्य यो न ददाति ताम् ॥ इति नारदः ।
प्रदानं प्रागृतोरिति गौतमधर्मोऽपि ।
अतोऽप्रवृत्ते रजसि कन्यां दद्यात् पिता सकृत् इति ।
[निर्णयसिन्धौ महाभारतवचनम् ।
गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददन् ब्रह्मलोकं रौरवं तु रजस्वलां ॥ इति मरीचिः।
इत्याद्यनेकमहर्षिवचनसहस्रैः ऋतोः पूर्वमेव गुणवते अथवा
किञ्चिन्न्यूनगुणाय वा अवश्यं विवाहयितव्येति च तथा विवाहं विना

रजः पश्यन्त्याः कन्यायाः तत्पित्रादीनां तद्वोढुश्च वृषलीत्व वृषलत्व रौरवादिनरकप्राप्तिरूपपापफलानि मुक्तकण्ठं प्रतिपादयन्त एव ।

नच "त्रिंशद्वर्षष्षोडशाब्दां भार्यां विन्देत नग्निकामिति भारतवचनेन षोडशवर्षीयायाः कन्यायाः विवाहो विधीयते ता दृशकन्याच

अष्टवर्षाभवेद्गौरी नववर्षाच रोहिणी ।
दशवर्षा भवेत्कन्या अतऊर्ध्वं रजस्वला ॥

इत्यादि वचनेन ऋतुमत्येव स्यात् तादृशकन्यायाः विवाह-विधानेन ऋत्वनन्तरमपि विवाहस्त्रीणां शास्त्रीयइति लभ्यत इति वाच्यं त्रिंशद्वर्षेति वचने विन्देत नग्निकामिति नग्निकापदविशे-षणोपादानात् षोडशवर्षीया नग्निकां कन्यां भार्यां विन्देत इत्य-र्थो लभ्यते नग्निकापदस्य

यावन्नलज्जिताङ्गानि कन्या पुरुषसन्निधौ ।
योन्यादीन्यवगूहेत तावद्भवति नग्निका ॥

इतिमुख्यार्थस्यालाभेपि नग्निकानागतार्तवेति अमरसिंहोक्तानागता-र्तवा इत्यर्थाङ्गीकारेपि कदाचित् क्वचित् या काचित् दैवात् षोडशवयस्का कन्या यद्यनृतुमती तां त्रिंशद्वयस्कः पुमान् भार्यां विन्देत इत्यर्थः नतु तादृशीं ऋतुमतीमुपयमेदिति तथासति पूर्वोक्त बहुवचनविरोधात् विरोधं विना वचनार्थस्योपपत्तिसंभवेऽन्य-थाकल्पनस्यान्याय्यत्वात् । किञ्च इदं वचनं विप्रानेवाधिकरोतीत्यपि

वक्तुं नशक्यते तद्बोधक विप्राद्यसाधारणपदाभावात् । अपि च त्रिंशद्वर्षोद्वादशाब्दामित्येव सांप्रदायिको मूलपाठ इत्यभिज्ञाः

तथाच नेदं वचनं ऋतुमतीविवाहे प्रमाणं भवितुमर्हति। यत्तु विमर्शकृता स्वोक्तऋतुमतीविवाहस्य शास्त्रीयत्व निरूपणाय प्रमाणीकृतानि। कानिचिद्वचनानि तथाहि

त्रीणिवर्षाण्यृतुमती कांक्षेत पितृशासनं।
ततश्चतुर्थे वर्षेतु विन्देत सदृशं पतिम् ॥ इति बोधायनः॥
त्रीणिवर्षाण्युदीक्षेत कुमारी ऋतुमती सती।
ऊर्ध्वन्तु कालादेतस्मात् विन्देत सदृशं पतिं॥ इति मनुः

इत्यादीनि अत्रब्रूमः बोधायनस्तावत् आदौ 'दद्यात् गुणवते कन्यां नग्निकां ब्रह्मचारिणे। अपिवा गुणहीनाय नोपरुन्ध्यानो द्रजस्वलामिति कन्यादानाधिकारिणः पित्रादीनुद्दिश्य गुणवते शास्त्रोक्तसद्गुणविशिष्टाय ब्रह्मचारिणे वराय नग्निकां

यावन्नलज्जताङ्गानि कन्या पुरुषसन्निधौ।
योन्यदीनवगुहेत तावद्भवति नग्निका॥
यावच्चेलं नगृह्णाति यावत्क्रीडति पांसुभिः।
यावद्दोषं न जानाति तावद्भवति नग्निका॥

इति वसिष्ठोक्त वयोविशेषास्थितां कन्यां दद्यात् पूर्वोक्तकालवि-शेषे तादृशगुणविशिष्टवरालाभे गुणवद्वरप्राप्तिपर्यन्तं विवाहेन वि-नैव ऋतुमत्यपिकन्या स्थापनीयावा उत किञ्चिन्न्यूनगुणायापि ऋतोःप्रागेव गौणेपि वा काले अवश्यं दातव्या वेति सन्देहे प्राप्ते आह।

अपिवा गुणहीनायेति गुणवद्वरालाभेन मुख्यकाले व्यती-तेपि रजोदर्शनात्प्राक् अवश्यं गुणहीनायापि शास्त्रोक्तपूर्णगुणर-

हितायापि वराय दातव्यैव तदानीमपि यदि गुणवद्वराभिलाष-या नदीयते कन्या दृष्टरजस्का भवेत्, तदा महान् दोषस्स्मर्यते तादृशदोषपात्रं मा भूवन् इति बोधयति 'नोपरुन्ध्यात् रजस्वलामिति, एवं कन्यादातृणां मुख्यकाले अथवा गौणकालेवा अवश्यं कन्याविवाहयितव्येति बोधयित्वा यदि पित्रादयः कन्यादातारः येन केनापि कारणेन शास्त्रोक्तं स्वीयं कन्याविवाहकर्मरूपं धर्म नानुतिष्ठन्ति तदा उपनयनस्थानीयां अवश्यकर्तव्यां वैवाहिकीं क्रियां परित्यज्य आमरणं साविवाहं विनैव स्थातव्या वा उत स्वयमेव यं कञ्चिदुचितं भर्तारं वृणीयाद्वा यद्वा उदासीनेन येनकेनचित् कारयितव्या वा इत्यादि विकल्पैः इति कर्तव्यतामूढां महति दुःखसागरे निमग्नां अत्यन्तापदि स्थितां तादृशकन्यामुद्दिश्य मुख्ये अथवा गौणे ऋतोः पूर्वकाले विवाहाकरणेन योदोषः प्रतिपादितः नसदोषः कन्यायाः-

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थाविरे भावे नस्त्रीस्वातन्त्र्यमर्हति ॥

काले अदाता पिता वाच्यः इत्यादि वचनैः तस्याः पराधीनत्वबोधनात् किन्तु मुख्यकर्तृणां पित्रादीनामेव तस्मात् ऋत्वनन्तरमपि कन्या वर्षत्रयं पितृशासनाकाङ्क्षिणी भवितव्या पश्चादेव तस्याः स्वयंवरन्यायेन पतिवरणे अधिकारइति नस्त्री स्वातन्त्र्यमर्हतीति स्वातन्त्र्यनिषेधे सत्यपि एतादृशि महत्यामापदि वर्षत्रयानन्तरं स्वातन्त्र्यं भवतीति तत्स्वातन्त्र्यं बोधयन् आह त्रीणिवर्षाणीत्यादि अत्र महतोऽनिवार्यादैवादुपघातात् कदाचिद्विघ्नितं विवाहकर्म ऋतोःपरं वर्षत्रयादर्वाक् कर्तुं पित्रादयो

ष्वागच्छन्ति तदा तादृशापत्समयेऽपि न कन्याया अधिकार. किन्तु तेषामेवेतिद्योतयितुं वर्षत्रयं पितृशासनाकांक्षिणी भवेत्युक्तं अनेन वचनेन अत्यन्तापत्समयेऽपि कन्यकानां वर्षत्रयानन्तरमेव स्वयंवरन्यायेन पतिवरणेऽधिकारः नतु ततःप्रागिति तादृशेसमये कन्यायाः पित्रा यदि वैवाहिकं कर्माचरितं न तदत्यन्तदोषा-येतिच कदाचित् कश्चिदत्यन्तापत्कल्पेन परमङ्गीक्रियते नह्यने-नानापद्यपि आपत् कल्पमङ्गीकर्तुं शक्यते योहि शक्तस्सन्नप्या-पदामिनयेन गौणे धर्मे प्रवर्तते स सापरायिकफलादवश्यं प्रच्य-वते तथाच एकादशे स्मरतिमनुः

'आपत्कल्पेन यो धर्मं कुरुतेऽनापदिद्विजः ।
सनाप्नोति फलं तस्य परत्रेति विचारितं ॥ ११-२८.
प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
न सांपरायिकं तस्य दुर्मतेर्वर्तते फलम् ॥ इति ११-३०.

तथाचात्यन्तापत्कालिकमिदं वचनमिति सिद्धं । अतएव 'अतः परं प्रवक्ष्यामि योषितां धर्ममापदीत्यारभ्य त्रीणिवर्षाण्युदीक्षेत कुमार्युतुमती अपि । इत्यापद्धर्मत्वेनोक्तैतत्समानार्थक मनुवचनेन न विरोधः । इदानीमेव नोपरुन्ध्याद्रजस्वलामिति पूर्वोक्तवचनार्थस्य नानुपपत्तिः :

वस्तुतस्तुपूर्वापरपर्यालोचनायां नेदं वचनं विप्रकन्यकामधिक-रोतीतिस्पष्टं प्रतीयते । तथाहि इतः पूर्वं

दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥ इत्युक्तं ।

तत्राहि ब्रह्मचारिणइति पदोपादानेन त्रैवर्णिकान् प्रत्येव गुण-

वते गुणहीनायापिवा वराय ऋतुदर्शनात्प्राक् कन्यां दद्यात् न रजस्वलामुपरुन्ध्यात् इति तत्रस्थब्रह्मचारिपदमेव मुक्तकण्ठं त्रैवर्णिकानामिति संगिरते। अत्र तु 'त्रीणि वर्षाण्यृतुमतीकांक्षेत पितृशासनमिति सामान्यमुखेनैव निरूपितं पूर्वोक्तं तु विशेषवचनं, तथाच यथा न हिंस्यात् सर्वाभूतानीति श्रुत्या प्राणिसामान्यहिंसा न कुर्यादिति निषिद्धापि अग्नीषोमीयं पशुमालभेतेति विशेषश्रुत्या अग्नीषोमीयपशुव्यतिरिक्तप्राणिसामान्यहिंसैव नकरणीयेति सामान्यश्रुत्यर्थस्य संकोचः क्रियते तथा इहापत्कल्पेनोक्तं वर्षत्रयप्रतीक्षणमपि ब्राह्मणजातिव्यतिरिक्तानामेव न तज्जातीयानामित्यर्थो लभ्यते एवंच अपिवा गुणहीनाय नोपरुन्ध्याद्रजस्वलामित्यस्य वचनस्य च

पितृगेहे तु या कन्या रजः पश्यत्यसंस्कृता।
भ्रूणहत्या पितुस्तस्याः सा नारी वृषळी स्मृता॥
यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः।
असंभाष्यो ह्यपाङ्क्त्यस्सविप्रो वृषळीपतिः॥

इत्यादिस्मृतिवचननिचयैस्साकं न विरोधस्संभवति अन्यथा गुणवते गुणहीनायवा ऋतोः पूर्वकाल एव अदत्ता या कन्या रजः पश्यति तत्क्षणादारभ्य सा वृषळीति गर्जत्सु महर्षिवचनसहस्रेषु अनेन परं आपत्कल्पमंगीकृत्य वर्षत्रयानन्तरमेव वृषळीत्वादिदोषइति उक्तश्चेत् तैस्सह विरोधस्पष्टएव। अयमेव सिद्धान्तः वयोनिर्णयकारैरपि वस्तुतास्त्वित्यारभ्यशास्त्रीयस्स्वाभिमतइति च प्रदर्शितः इहोक्तरीत्या ऋतुदर्शनात्पूर्वमेव कन्याविवाहस्य गौणकालोपि नस्त्वनन्तरमपि कश्चित्कालइति प्रतीयमाने ऋत्वनन्तरमपि वर्षत्रयं विप्रकन्यादानस्य

गौणकालं अभिप्रैति बोधायन इति विमर्शकृत्प्रलापः प्रत्युक्तः। **यदपि त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमतीसती।** इति इदमपिमनुवचनं **ऋतोः परं वर्षत्रयं विवाहस्य गौणः कालइत्यत्र प्रमाणमिति।** तन्न मनुस्मृतौतावत् नवमाध्याये अतःपरं प्रवक्ष्यामि योषितां धर्ममापदि (९-५६) इत्युपक्रम्य मध्ये 'त्रीणि वर्षाण्युदीक्षेत कुमारी ऋतुमती सती (९-९०) इति पठित्वा अनन्तरं 'एषस्त्रीपुंसयोरुक्तो धर्मो वो रतिसंहितः। आपद्यपत्यप्राप्तिश्च (९-१०३) इत्यन्तेन आपद्धर्मप्रकरणोपसंहारश्च स्वेनैव स्पष्टं निरूपितः उपक्रमे आपदि धर्मं प्रवक्ष्यामीति आपद्ग्रहणेन अन्तेच आपदि एषधर्मो उक्तइति आपद्ग्रहणेन एतन्मध्ये पठितैः कैश्चिद्वचनैः आपद्धर्ममपि बोधयति मनुरिति काव्यमात्रपरिचयभाग्भिरपि विशदतरं विज्ञायते तथाच आपद्धर्मबोधकवचनमध्यपठितेन 'त्रीणि वर्षाण्युदीक्षेत कुमारी इत्यनेनापि वचनेन, अत्यन्तापद्येव त्रिवर्षप्रतीक्षणमिति महर्षिणा मनुनैव अभाणि। एवमत्यन्तापद्युक्तोऽनापदि न स्वीकर्तुमर्हतीत्यनेनैव प्रपञ्चितं वचनद्वयमापत्कल्पनेत्यादिकं पूर्वमेव दर्शितं। तथाच नेदमपि मनुवचनं ऋतुमतीविवाहे प्रमाणमिति सिद्धम्॥

अत्रेत्थं विमर्शकृता भ्यूहितः अतःपरं प्रवक्ष्यामि योषितां धर्ममापदीत्यारभ्य

"यथा विध्यधिगम्यैनां शुक्लवस्त्रां शुचिस्मिताम्।
मिथो भजेताप्रसवात् सकृत्सकृदृतावृतौ"॥

इत्यन्तं नियोगधर्मः कथ्यते। स एव आपद्धर्मइति युक्तं। तदनन्तरं न दत्वा कस्यचित् कन्यां पुनर्दद्यात् विचक्षणः। इत्या-

रभ्य मुख्य एव धर्मः खलु कथ्यते । उपसंहारेच 'एषस्त्रीपुंसयोरुक्तो धर्मो वो रतिसंज्ञितः । आपद्यपत्यप्राप्तिश्च इत्यत्र स्त्रीपुंसयोर्धर्म उक्तः आपदि नियोगेन येयमपत्यप्राप्तिः सा च उक्ता इत्यन्वयस्संगतः आपदि स्त्रीपुंसयोः धर्मइतितु न संगच्छेत अतः परं प्रवक्ष्यामि योषितां धर्ममापदि । इत्येतदुपरितनानामपि सर्वेषां आपद्धर्मत्वमभिप्रेतमित्यपि न युक्तं आपद्यपत्यप्राप्तिश्चेत्यत्र अपत्यग्रहणस्य वैयर्थ्यापत्तेः इत्यादिः ।

इह किंचिद्विचारयामः, 'यथाविध्याधिगम्यैनांशुक्लवस्त्रां शुचिस्मिता'मित्यन्तमेव आपद्धर्मो युक्त इति किमिदं मनोरभिप्रायमनुसृत्यवा उत तद्वचनव्याख्यनकर्त्रभिप्रायानुरोधेन वा अथ वा इतरस्मृतिकर्तृमतानुसारेणवा यद्वा स्वप्रतिभाविशेषेण वा नाद्यः यदि मनोरभिमतं स्यात् इहैववा अनन्तरवचने वा आपदि ग्रहणं भवेत् न तथा । येन अतःपरमित्यारभ्य यथा विध्याधिगम्यैनामित्यन्तमेव आपद्धर्म इति महता श्रमेण सिषाधयिषोः भवतो अभिमत सिद्धिर्जायेत उपरिच आपद्यपत्यप्राप्तिश्चेति आपदि ग्रहणं कृतं किमिदं आपदि ग्रहणं पूर्वमेव कर्तुं न जानाति वा मनुः न द्वितीयः तद्वचनव्याख्याने तथा अदर्शनात् न तथा अदर्शनमात्रं किन्तु अस्य वचनस्य आपद्धर्मप्रकरणस्थत्वमेवांगीकरणीयमितिच विज्ञायते॥ तथाहि तत्र एवं व्याख्या कृता न दत्वेति कस्मैचित् वाचा कन्यां दत्वा तस्मिन् मृते दानगुणदोषज्ञः तामन्यस्मै न दद्यात् तथा दातुः दोषश्रवणात् सप्तपदीकरणस्य अजातत्वात् भार्यात्वानिष्पत्तेः पुनर्दान शङ्कया इदं वचनमिति। तत्र पूर्वं वाङ्निश्चये कृतेपि आपत्काले पुनर्दानं न दोषायेति कदाचित् दातुं प्रवर्तेत आपद्यपि तद्दानं न कुर्या-

दित्यर्थांगीकारेण न कोपि विरोधः। न तृतीयः केनापि क्वचिदप्य-नुक्तत्वात् एतत्कथनस्य प्रसक्त्यभावाच्च। स्वप्रतिभाविशेषेणेति यदि चतुर्थप्रकारेण बाढं युज्यते इतोपर्यपि नवनवार्थाविष्करणशक्तिमतः तस्य प्रतिवक्तुं अनीशाः पण्डितवरा अपि के पुनर्मादृशाः। एवं स्थिते वचनार्थे तत्र आपदीति न संबध्यते मुख्यएव कालइति शपथे प्रवर्तनं स्वीयं दुराग्रहमेव प्रकटीकरोति। अपिच उपसंहारे च 'एषस्त्रीपुंसयोरुक्तो धर्मो वो रतिसंज्ञितः। आपद्यपत्यप्राप्तिश्चे-त्यत्र आपदि नियोगेन येयं अपत्यप्राप्तिः सा च उक्ता इत्येव अन्व-यस्संगतः आपदि स्त्रीपुंसयोर्धर्मइति न संगच्छेत इत्यादि निरूपितं तत्रोच्यते पूर्वं अनापदि संयुक्तस्त्रीधर्मे साकल्येन उपदिश्यमानेपि आपद्धर्मस्य अनुपदिष्टत्वात् पुनरपि आपद्धर्मप्रकरणे तद्धर्मं उपदि-श्यतएव यथावा

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती।
ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिमिति॥(९-१०)
अदीयमाना भर्तारं अधिगच्छेद्यदि स्वयम्।
नैनः किञ्चिदवाप्नोति न चयं साधिगच्छतीति॥

आभ्यां वचनाभ्यां कन्यादाने

पिता पितामहो भ्राता सकुल्यो जननी तथा।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः॥

इति वचनेन पित्रादीनामेव अधिकारे बोधितेपि सत्यापत्काले कन्या स्वयमेव पतिं वृणीयात् तस्याः स्वयंवरणविषये शास्त्रीयाधिकारे अ-सत्यपि आपत्काले यदि स्वयमेव वृणोति न सा अशास्त्रीयकारिणी

किन्तु स धर्मश्शास्त्रीयएव अतः न किश्चिदप्येनः सा प्राप्नोतीति स्त्रीधर्मो निरूप्यतएव तथाच एषस्त्रीपुंसयोरित्यत्र 'स्त्रीपुंसयोः आपदि एषः त्रीणि वर्षाणीत्यादिवचनोक्तः धर्मः अपत्यप्राप्तिश्च उक्तइत्येव स्वारसिकोर्थः न चापत्यप्राप्तिग्रहणस्य वैयर्थ्यं अतः परं प्रवक्ष्यामि योषितां धर्ममापदीति आपद्धर्मप्रकरणोपक्रमएव 'प्राधान्येन योषितां आपदि धर्मं अपत्यप्राप्तिरूपं धर्मं च वक्ष्यामीति प्रतिज्ञातत्वात् तत्प्रकरणसमाप्तिसमयेपि ब्राह्मणवसिष्ठन्यायेन गोबलीवर्दन्यायेन च पुनरपत्यग्रहणं कृतं एतेन अतः परं प्रवक्ष्यामि योषितां धर्ममापदीत्यारभ्य आपद्यपत्यप्राप्तिश्चेत्यन्तस्य आपद्धर्मप्रकरणत्वे अंगीकृते अन्ततो अपत्यग्रहणस्य वैयर्थ्यमिति भ्रमोक्तिरपि परास्ता । तथाच ऋतुमतीविवाहविषये यन्मूर्धाभिषिक्तप्रमाणत्वेन उपन्यस्तं मनुबोधायनोक्तं वचनद्वयं तदत्यन्तासंगतमिति सिद्धं । एवंस्थिते तत्वार्थे पण्डितजनोचितया तटस्थविधया स्मृतिवचनार्थमपर्यालोचयन् मनसि कांचिद्दुरभिसंधिं निधाय आपातदर्शनमात्रेण पूर्वं परं प्रकरणं इतरबहुमहर्षिकृतराद्धान्तं च किंचिदप्यदृष्ट्वा ऋतुमतीविवाहश्शास्त्रीयइति वक्तुं निश्शंकमारभत विमर्शकारः (३) किञ्च अंगिरश्शातातपवसिष्ठाश्वलायनयमसंवर्तबृहस्पतियाज्ञवल्क्यपराशरनारदप्रभृतिस्मृत्युक्तेषु

पितृगेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः ॥

इत्याद्येषु ऋतुमतीविवाहेषु दोषाधिक्यं बोधयत्सु वचननिचयेषु तत्रतत्र प्रतिवचनं गुणवद्वरलाभविषयकमेतदिति तत्तादृशमतिविभवेषु महार्षिनिवहेषु अन्यतमेनापि दोषकथनवचनेषु अनुक्तं प्राचीनैः

स्वमतिविभवैः अवतारभेदस्मरस्वत्याइति सर्वजननिश्चितैः सर्वतंत्रस्व-तंत्रैः अस्मद्देशीयैश्च विबुधवरैरपि अननुष्ठितं अनभ्यूहितं अनंगीकृतं अपूर्वं कंचिदर्थविशेषं स्वीकृत्य विमृशकृल्लोकोपकारबुद्ध्या च महता श्रमेण उपदिशति । यद्ययं ऋतुमतीविवाहः तेषामभिमतस्स्यात् किं ऋतुमतीविवाहदोषकथनाय प्रवृत्ताः तादृशप्रतिभाशालिनः महर्षयः गुणवद्वरलाभइति पदं न जानन्ति उत जानन्तोपि दोषबोधकवचनमध्ये संयोजयितुंवा असमर्थाः अथवा भवंतुनाम एते एतद्वचनबोधितार्थानुष्टानपराः प्राञ्चः पण्डितवराः एतमभिप्रायं न कथमाविष्कुर्युः किं तदनुष्ठितधर्माः स्मृत्यन्तरोक्ताः यद्वा न ते एतादृशप्रतिभाविशेषशालिनः आहोस्वित् गार्हस्थ्यखेदानभिज्ञाः एतादृशशास्त्रशिष्टसमुदायविगर्हितऋतुमतीविवाहस्य स्थापनाय प्रकृष्टोद्यमस्य विमर्शकारस्य अयमप्युपदेशः कालेयः कश्चित्क्रीडाविशेष इति स्पष्टं शिष्टजनानाम् ।

अन्यच्चाभ्यूहितं रजस्वलाविवाहाय स्वप्रतिभाविशेषेण विमर्शकृता तथाहि क्वचित् गुणवद्वरलाभेन गर्भाष्टमात्प्रागपि कुमारीणां विवाहोऽभ्यनुज्ञायते यथा माधवीये मनुः

**उत्कृष्टायाभिरूपाय वराय सदृशाय च ।**
**अप्राप्तामपि तां तस्मै कन्यां दद्यात् यथाविधि ॥(९-८)**

इति । वैद्यनाथदीक्षितीयेपि यमः

**बालिका या भवेत् कन्या गुणाढ्यो यदि लभ्यते ।**
**दद्यादप्राप्तकालेपि देशकालभयान्नरः ॥** इत्यादीनि त्रिचतुर्वचनानि प्रदर्श्य यथाच गुणवद्वरापेक्षया बालिकाया अपि विवाहो

म्यनुज्ञायते एवं गुणवद्वरालाभेपि तल्लिप्सया कन्यकानां ऋतोः परमपि वर्षत्रयं दानकालो अभ्यनुज्ञायत इति एतदुपष्टंभकेन प्रागुक्तत्रीणि वर्षाण्यृतुमतीइत्यादि द्वित्रिवचनानि प्रदर्शितानि ।
अत्र प्रतिकथयामः त्रीणिवर्षाणीत्यादिवचनानि विमर्शकाराभिमतं न किञ्चिदपि कटाक्षयतीति प्रागेव प्रपञ्चितं । अपिच गुणवद्वरलाभेन गर्भाष्टमात्प्रागपि यथा उत्कृष्टायाभिरूपायेत्यादिप्रमाणवचनैः कन्यकानां विवाहे 'अप्राप्तामपि तां 'दद्यात् दद्यादप्राप्तकालेपीति दातृनुद्दिश्य विधिश्श्रूयते। तथास्य न किञ्चिदपि निषेधवचनमुपलभामहे येनास्यापि ऋतुमतीविवाहवदशास्त्रीयत्वशंका संभाव्येत नैवं ऋतुमतीविवाहस्य । एतद्दृष्टान्तेन स कथं साधयितुं शक्यते तस्य तु

पितुर्वेश्मनि या कन्या रजस्तु समुपस्पृशेत् ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषळी स्मृता ॥
माताचैव पिताचैव ज्येष्ठो भ्राता तथैवच ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥ (इत्यंगिराः)
गौरीं ददत् नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददत् ब्रह्मलोकं रौरवंतु रजस्वलामिति ॥(मरीचिः)
अपित्रा गुणहीनाय नोपरुन्ध्याद्रजस्वलामित्यादिभिश्च ।

निस्संकोचं गुणवद्वरालाभेपि ऋतोः प्रागेव कन्यकानामवश्यं वैवाहिकं कर्म कार्यमितिच ऋत्वनन्तरं विवाहकर्माचरणं महते दोषायेति च ऐककण्ठ्ये न निषेधस्मरणात् एवं गर्जत्सु निषेधवचनसहस्रेषु रजस्वला विवाहशास्त्रीयइति स्थापनाय विधृतोद्यमः विमर्शकारः किञ्चिदपि पौर्वापर्यं अगणयित्वा यथाशास्त्रं अनृतुमतीविवाहएव साधुरिति वयोनिर्णयसिद्धान्तं खण्डयितुं कथं प्रवृत्तः अयमपि कलेर्विलासएव

अपरं चेदं मनुस्मृतिविचारे यदुक्तं वयोनिर्णयकारैस्त्रीणि वर्षाणीत्यादि वचनानि शूद्राविषयाणीति तद्वचनमनूद्य तदिहोक्तरीत्या प्रत्युक्तमिति द्रष्टव्यमितिच 'नैनः किञ्चिदवाप्नोतीत्यत्र वृषल्या वृषळीत्वं वृषळस्य वृषळीपतित्वंच न भवतीति व्याहतत्वादिति प्रतिपादितं दृश्यते विमर्शे । अत्र एतदुपक्रमात्पूर्वं किञ्चिन्निरूप्य तस्मान्नायं विवाहः केवलं भोगाय अपितु धर्माय प्रजायैचेत्यनवद्यमिति निगनमकारि तादृशसिद्धान्तितार्थरीत्या त्रीणिवर्षाण्यृतुमतीत्यादिवचनानां शूद्रविषयत्वेंगीकृते न कापि हानिः प्रतीयते । शूद्राणां विवाहस्तावत् शूद्रकमलाकरादिग्रन्थेषु केवलं भोगार्थंवा विधीयते अस्यामेव मनुस्तौ तृतीयाध्याये

षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरो वरान् ।

विट्शूद्रयोस्तु तानेव विद्याद्धर्मानराक्षसान् ॥ २३) इति वचनेन विट्शूद्रयोरपि राक्षसवर्जान् असुरगान्धर्वपैशाचान् धर्म्यान् धर्मादनपेतान् विद्यात् जानीयात् इत्यार्थोपयद्व्याख्याकारोऽपि । तथाच मनुवचनेनैव शूद्रस्यापि वैवाहिकं कर्म धर्म्यमेवेति स्पष्टं ज्ञायते । एवंच यदुक्तमत्र विमर्शे उक्तरीत्या वयोनिर्णयकारोक्तं प्रत्युक्तमिति तदेव प्रत्युक्तमिति विभावयन्तु सुधियः !

अन्यच्च यदुदीरितं त्रीणिवर्षाणीत्यस्य शूद्रविषयत्वमितिचेत् नैनः किञ्चिदवाप्नोतीत्यनेन वृषल्या वृषळीत्वं तत्पतेः वृषळीपतित्वं च न संभवतीति, । नैतदप्युपपन्नं । एनो भवतीत्येव मनुना निरूप्यते न वृषळीत्वं तत्पतित्वं वा तच्चैनः पदं त्रीणिवर्षाण्युदीक्षेत कुमार्यृतुमतीति वचनं विप्रकन्यानामत्यन्तापत्कालीकं धर्मं बोधयतीति पक्षे स्मृत्यन्तरे

पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्यास्सा कन्या वृषळी स्मृता ॥

इत्यादिवचनैः विवाहात्प्राक् रजः पश्यन्त्यायाः यादृशं वृषळीत्वं तत्पतित्वरूपदोषश्रवणं तादृशं एनः पापं न भवतीत्युच्यते यदि त्रीणिवर्षाणीति वचनं शूद्रविषयकमित्युच्यते तदा एनः पापं नाप्नोति तच्च किं रूपमिति जिज्ञासायां स्मृत्यन्तरैर्निर्णेयं अतएवात्र मनुना इदन्तयानोक्त्वा एनइति सामान्यमुखेनैव प्रतिपादितं त्रीणिवर्षाणीति वचनं यदि विप्रकन्याविषयं तदा वृषळीत्वादिकं न भवतीति स्मर्तृन्तरवत् स्पष्टमेव ब्रूयात् । अतो वयोनिर्णयकारैः यदुक्तं त्रीणिवर्षाणीति वचनं शूद्रविषयकमिति तदेव वज्रलेपायते ॥

अपिच विमर्शकारः वयोनिर्णयकारैः त्रीणि वर्षाणीत्यस्य शूद्रविषयत्वे

पित्रे न दद्याच्छुल्कन्तु कन्यामृतुमतीं हरन् ।
सहि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात् ॥ ९-९३ इति

शुल्कप्रतिषेधमेव लिंगमिति निरूपितमनूद्य तन्नसंभवति शूद्रवदासुरविवाहस्य ब्राह्मणविषयेपि अभ्यनुज्ञायतएव तथाच वचनं षडानुपूर्व्या विप्रस्य (म-३-२३) इति प्रादर्शयत् । इदमप्यसंमतं । यद्यपि षडानुपूर्व्या इति वचनेन सामान्यतो आसुरविवाहोपि ब्राह्मणस्य बोध्यते । तथापि अनन्तरोक्तेन

चतुरो ब्राह्मणस्याद्यान् प्रशस्तान्कवयो विदुः ।
राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः ॥

इति वचनेन चत्वारएव विवाहाः ब्राह्मणानां विधीयन्ते। आसुरादीनांतु जघन्यत्वात् प्रशस्तविवाहासंभवे बोध्यः इति तद्व्याख्याच कदाचिदापत्समये अंगीकृतइव प्रतिभाति । उक्तवचनेनच पैशाचश्चासुरश्चैव न कर्तव्यौ कदाचन । ३-२५- इति स्पष्टमासुरविवाहः प्रतिषिध्यते। तथाच ब्राह्मणस्यासुरविवाहाभावेन शुल्कदानस्याप्रसक्त्या पित्रे न दद्याच्छुल्कन्तु कन्यामृतुमतीं हरन्निति वचन त्रीणि वर्षाण्यृतुमतीत्यस्य शूद्रविषयत्वे लिंगमिति वयोनिर्णयकारनिरूपितमत्यन्तं समीचीनमेव ।

तथाच विवाहं चोपनयनं स्त्रीणामाह पितामहः ।
तस्माद्गर्भाष्टमश्श्रेष्ठः जन्मतोवाष्टवत्सरः ॥

इत्याद्यनेकमहर्षिवचनैः गर्भतो जन्मतोवा अष्टमएव वत्सरः कन्यकानां विवाहकर्मणि मुख्यः कालः ततःपरं ऋतोःप्राग्गौणः कालइति सिद्धं विस्तरस्तु श्री महामहोपाध्याय वेदान्तकेसरीति बिरुदांकितास्मत्श्रीगुरुचरणविरचितवयोनिर्णयग्रन्थे द्रष्टव्यः ॥

---

वयोनिर्णयभावप्रकाशिकायां स्मृत्यर्थविचाराख्यं
प्रथमं प्रकरणं समाप्तम् ।

---

# अथ द्वितीयप्रकरणम् ।

यत्तु विमर्शकृता प्रत्येकस्मृतिविमर्शइत्यारम्य मनुस्मृत्यभिप्रायः प्रथमे प्रकरणे निरूपितप्रायएव ततः किञ्चिदिह संगृह्योच्यतइति उपक्रम्य वैवाहिको विधिस्त्रीणामौपनायनिकस्मृतः । इति वचनेन त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीं । त्र्यष्टवर्षोऽष्टवर्षांवा (९—९४) इत्यनेन वचनेन च कन्याया मुख्यस्य विवाह कालस्य अष्टमद्वादशे वयसी पूर्वोत्तरावधी इति द्योत्यतइत्यादि निरूप्य अन्ततः अष्टमादिद्वादशन्तानि वयांसि मुख्यएव कालइति सिद्धान्तितम् ।

अत्र विचार्यते स्त्रीणामुपनयस्थाने विवाहं मनुरब्रवीदित्यनेन उपनयनमुख्यकालएव विवाहस्यापि मुख्यः कालइति मनोरभिप्राय इति प्रतीयते उपनयनस्य तु गर्भाष्टमे तु कुर्वीत ब्राह्मणस्योपनायनमिति तदीयवचनेनैव गर्भाष्टमएव मुख्यः कालइति विधीयते तथाच उपनयनस्य मुख्यकालत्वेन निरूपितं गर्भाष्टममेव वयः विवाहस्यापि मुख्यमितिमनोरभिप्रायः इममेवाभिप्रायमनुस्मृत्य

**विवाहं चोपनयनं स्त्रीणामाह पितामहः ।**

**तस्माद्गर्भाष्टमश्श्रेष्ठः जन्मतोवाष्टवत्सरः ॥** इति यमेनापि स्मर्यते । त्रिंशद्वर्षो वहेत्कन्यामिति वचनस्य तु अत ऊर्ध्वं प्रवक्ष्यामि योषितां धर्ममापदीत्यारम्य एपस्त्रीपुंसयोरुक्तो धर्मो वो रतिसंज्ञितः । आपद्यपत्यप्राप्तिश्चेत्यन्तापत्प्रकरणमध्यगतत्वात् अनापत्प्रकरणस्थवचनार्थविरुद्धः नैतद्बोधितः द्वादशवयस्कायाअपि कन्यायाः विवाहकालो मुख्यो भवितुमर्हति तुष्यतु दुर्जनन्यायेनास्य वचन

स्य परमनापत्प्रकरणस्थत्वेंगीकृतेपि योग्यताप्रदर्शनमात्रपरमिदं नतु मुख्यकालत्वेन परिगणनपरं एवमेव कुल्लूकभट्टोपि विवृणोति। तथाहि प्रथमतः एतद्वचनार्थं निरूप्य ततः एतच्च योग्यकालप्रदर्शनपरं नतु नियमार्थमित्यादि किञ्च प्राक्

**गर्भाष्टमेतु कुर्वीत ब्राह्मणस्योपनायनम्।**
**गर्भादेकादशे राज्ञः गर्भात्तु द्वादशे विशइति** मुख्यं कालं निरूप्य ततः पुर्वोक्तमुख्यकाले विघ्नबाहुल्यात्कर्तुं नशक्यतेचेत् पश्चात् गौणोपि वा कालो न संभवतीति शङ्कायां क्षत्रियवैश्यजातीयः कालो ग्राह्यः। तत्रापि यद्यसौकर्यं आषोडशाद्ब्राह्मणस्य गायत्री नातिवर्तत इत्यादि निरूप्य ततःपरं

**अत ऊर्ध्वं त्रयोप्येते यथाकालमसंस्कृताः।**
**सावित्री पतिता व्रात्या भवन्त्यार्यविगर्हिता॥** इति।

२—३९.- पातित्यं च स्मर्यते एतद्वचनविवरणसमयेच एते ब्राह्मणादयः यथाकालं यो यस्य अनुकल्पकोप्युपनयनकालउक्तः षोडशवर्षादिपर्यन्तं तत्र असंस्कृतास्तदूर्ध्वं सावित्री पतिता इत्यादिव्याख्यातं अत्र अनुकल्पकइत्युक्तत्वेनच गर्भतो जन्मतोवा अष्टमात्परः कालः सर्वोपि गौणएवेति विज्ञायते। एवमेव याज्ञवल्क्यबुधशौनकगौतम आपस्तम्बादयो अभिप्रयन्ति एतादृशउपनयनस्थानापन्नविवाहस्यापि गर्भतोजन्मतोवा अष्टमएववत्सरः मुख्यःकालः तदन्यस्सर्वोपि गौणएव। तथाच ऋत्वनन्तरमपि वर्षत्रयं गौणकालं मनुर्वदतीति प्रतिपादनं साहसमात्रमेव ऋतुमतीविवाहं गौणकालेनापि मनुर्नाङ्गीकुरुत इति वयोनिर्णयवर्णितएव सिद्धान्तो मनोरभिप्रायः।

अन्यच्च याज्ञवल्क्यस्मृतावित्यारभ्य अत्र विवाहकालः कण्ठतो न निरूप्यते तथापि

अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरं (१—६४)

इति ऋतुदर्शनात्परं अदाने दोषश्रवणात् ऋतुसमयप्राप्तौ अवश्यकर्तव्यो विवाहः कन्यकानामित्ययमर्थो लभ्यते तथापि गुणवतएव कन्या दातव्या न अगुणाय इत्युक्त्वा सकृत्प्रदीयते कन्यां हरन् तां चोरदण्डभाक्। दत्तामपि हरेत्पूर्वात् श्रेयांश्चेत वरआव्रजेत् । इत्युपष्टंभकवचनंच प्रदर्श्य अतएव अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ इति श्लोकं व्याचक्षाणो विज्ञानेश्वरआचार्यः एतच्च उक्तलक्षणवरसंभवे वेदितव्यमिति आचरव्यौ इत्युक्त्वा उपसंहारे अत्रापि स्मृतौ ऋतुमती सर्वथा न विवाह्येत्ययमर्थो न लभ्यते किन्तु ऋत्वनन्तरं पूर्वं वा सदृशं वरमन्विष्य दातव्यमिति प्रतीयतइति विमर्शकृता वर्णितं ।

अत्र विचार्यते प्रथमतावदत्र विवाहकालः कण्ठतो नानिरूप्यतइति विरुद्धं अप्रयच्छन् समाप्नोति भ्रूणहत्यामित्यनेन मुक्तकण्ठं बोधितत्वात् अनेनापि अस्मिन्नेव लिखितत्वाच्च नचेदं वचनं विवाहकालं बोधयतीति वाच्यं । अप्रयच्छन् कन्यादानाधिकारिणः प्रतिऋतुं भ्रूणहत्यारूपदोषस्मरणेन पूर्वमेव संभवद्वराय अवश्यं कन्या देयेति स्पष्टं प्रतीयते । सच पूर्वकालः कइति जिज्ञासायां इदन्तया नोक्ततया स्मृत्यन्तरेण गर्भाष्टमइत्यादिवचनोक्तकालः मुख्यः । ततःपरं ऋतोरर्वाक् गौणकालइति । तथाच गौणेवा मुख्येवा ऋतोःपूर्वमेव अवश्यं कन्यकानां वैवाहिकं कर्म समाचरणीयं न चेत् भ्रूणहत्यां प्राप्नोतीति महर्षियाज्ञवल्क्याभिप्राये स्पष्टं प्रतीयमाने ऋतुदर्शनात्परं

अदाने पित्रादीनां दोषस्मरणमिति वर्णनमसंगतं । किञ्च सकृत्प्रदीयते कन्या इतिवचनंच वाग्दानविषयं नानेन वचनेन ऋतोरनन्तरं गुणवद्वरालाभे वर्षत्रयप्रतीक्षणं बोध्यते ऋतोःपूर्वकाले वाग्दानानन्तरं यदि श्रेष्ठो वरो लभ्येत तस्मै देया इत्येवार्थः अप्रयच्छन् इति वचने अपरार्ककृतव्याख्याच अत्र प्रमथाणं । तत्रहि एतद्वचनं व्याख्याय यत्तु मनुवचनं काममारणात्तिष्ठेत् गृहे कन्यर्तुमत्यपि । नत्वेवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् । इति तद्गुणवद्वरसंभवे गुणहीनाय न दातव्येति एवंपर नतु कन्यर्तुदर्शनं अदोषइत्येवमर्थं तथाहि सति वचनान्तरविरोधः ।

पितुर्गेहे तु या नारी रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्यास्साकन्या वृषळी स्मृता ॥

इत्यादिदर्शितं नच विज्ञानेश्वरविवरणरीत्या गुणवद्वरलाभे ऋत्वनन्तरमपि विवाहकालो भवत्येवेति वाच्यं । अस्य वचनस्य अपरार्केण वर्णितार्थेन पितुर्गेहे तु यानारीत्याद्यनेकस्मार्तवचनार्थैश्च सह विरोधसंभवादुपेक्ष्यमेव अथवा जात्यन्तराभिप्रायेणवा भवतु तथाच अनया याज्ञवल्क्यस्मृत्याच ऋतोः प्रागेव कन्यकानां विवाहकालः न त्वनन्तरमपीति बोध्यते स्मृतिषु प्रधानभूताभ्यां रजोदर्शनात्पूर्वमेव कन्यकाविवाहं बोधयन्तीभ्यां मनुयाज्ञवल्क्यस्मृतिभ्यां ऋतुप्रसौविवाहो दूरोत्सारितइति स्फुटीभवति अन्ये बोधायनआपस्तम्बगौतमवासिष्ठादयोपि ऋतोःपूर्वमेव विवाहकरणं शास्त्रीयमिति तथाऽकरणे दोषइतिच

दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपिवा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥बो ४-१-१२।

प्रदानं प्रागृतोः (गौ-१७-२१.

प्रयच्छेन्नाग्निकां कन्यामृतुकालभयात्पिता ।
ऋतुमत्यां हि तिष्ठत्यां दोषः पितरमृच्छति ॥ वसिष्ठः ।

इत्याद्यनेकवचनैः प्रतिपाद्य कन्यकानां स्वविवाहविषये स्वस्य कर्तृत्वाभावेपि मुख्यदात्रभावे क्वचित् कालविशेषे स्वस्य कर्तृत्वं त्रीनृतूनतीत्य स्वयमेव युज्येतेत्यादिभिर्बोधयामासुः । ननु ऋत्वनन्तरमपि वर्षत्रयं विवाहस्य गौणः कालइति । पराशरेणतु ऋतुमतीविवाहोऽशास्त्रीय इति स्पष्टं निषिद्धोपि तदभिप्रायमन्यथयितुं मुधा महान्तं क्लेशमावहति विमर्शकारः तत्रापि न किञ्चिदप्यभिमतसिद्धिः ऋतुमतीविवाहकाराणामिति प्रकाशिकानुबन्धे निरूपयिष्यते । इत्थं स्मृतीनां प्रत्येकाभिप्रायेणवा ऐकमत्येनवा ऋतोः पूर्वमेव विप्रकन्यानां विवाहकरणं आवश्यकं । नचेद्दोषस्संभवतीति सिद्धेपि वयोनिर्णयकारोक्तसिद्धान्ते ऋतुमतीविवाहश्शास्त्रीयइति स्थापनाय प्रवर्तमानः विमर्शकारः स्वीयं दुरभिनिवेशमेव स्फुटयतितरामिति सिद्धं ।

इति वयोनिर्णयभावप्रकाशिकायां द्वितीयं प्रकरणं समाप्तम् ॥

---

श्रीगुरुभ्यो नमः ।

# अथ गृह्यार्थविचाराख्यं तृतीयं प्रकरणम् ।

पूर्वप्रकरणद्वयेन मनुयाज्ञवल्क्यबोधायनादिस्मृतीनां तात्पर्य पर्यालोचने ऋत्वनन्तरमपि वर्षत्रयं कन्याविवाहस्य गौणकालस्समर्यत इति अन्यार्थवचनानि प्रदर्श्य योर्थो विमर्शकृताभ्यूहितः सच तत्तद्वचनयथार्थनिरूपणेन अस्माभिर्निराकृतइति स्पष्टं द्रष्टृणां ।

इदानीन्तु गृह्यसूत्रेषु ऋतुमतीविवाहस्याप्रकम्प्यं प्रमाणमस्ति इत्यभिप्रायेण किञ्चिज्जल्पितं विमर्शकृता तच्च विचारयामः । तत्रतावत् ऋतुमतीविवाहस्थापनपरैः गृह्यसूत्रेषु कन्यादोषगणनेषु ऋतुमतीत्वस्याकथनं प्रथमं लिंगमिति गृहीतस्य खण्डनाय वयोनिर्णकारप्रकटितान्यनूद्य स्मृत्यर्थविचारे ऋत्वनन्तरमपि वर्षत्रयं विवाहस्य गौणःकालइति निजाभिमतार्थस्य प्रमाणत्वेन प्रदर्शितैरन्यार्थकैः द्वित्रिवचनैः स्वनिर्णीतार्थं नालमन्यथयितुममरगुरुणापीति मनसि मन्वानेन विमर्शकृता अत्र गृह्यसूत्रेष्वनिषेधरूपप्रथमलिंगस्याभासीकरणाय वयोनिर्णये उपन्यस्ताः युक्तयः यदि स्मृतयः ऋतुमती न विवाह्या इति ब्रूयुः तर्हि आभासीकुर्युरेव लिंगं स्मृतयस्तु न तथा ब्रुवन्तीति प्रतिपादितमधस्तादिति विलिखितं इदमसंगतं स्वमतिनिर्धारितस्मृत्यर्थः तत्तत्कर्त्रा महर्षिणाप्यन्यथयितुमशक्यइति यदि स्मृतयः ऋतुमती न विवाह्या इति ब्रूयुः तर्हि आभासीकुर्युरेव लिंगमिति यत् प्रतिपादितं तत् सप्रमाणं स्मृतयः ऋतुमतीविवाहं न बोधयन्ति किन्तु दोषमेवाधिकं विदधतइति प्राङ्निरूपितार्थेन दूरापास्तं स्वयंतरितुमिति न्यायेन तासामेव तद्बोधकत्वेऽसिद्धे इतरस्य तद्बोधकत्वसाधनाय कथं प्रभवेयुः

यद्यपि ऋतुमतीविवाहकारैः जैमिनिगृह्योक्तेन अनग्निकापदेन नग्निका नागतार्तवेति अमरसिंहेन नग्निकापदस्यानृतुमत्यां शक्तिप्रदर्शनात् प्रकृते अनग्निकापदेन तद्भिन्ना ऋतुमत्येव विवाह्या इति द्वितीयं लिंगं तत्खण्डनाय अमरसिंहोक्तार्थः प्रकृते नांगीकरणीयः मुनिवचन संदेहे मुनिवचनान्तरैरेव निर्धारयितव्य इति यावन्नलज्जिताङ्गानीति वसिष्ठोक्तवचनद्वयं प्रमाणत्वेन प्रदर्श्य ऋतोः प्रागेव विवाहश्शास्त्रीयइति द्वितीयालिंगनिरसनपूर्वकं स्थापितं वयोनिर्णयोक्तसिद्धान्तमनूद्य विमर्शकारेणैवमुच्यते स्यादिदं न्याय्यं यदि वसिष्ठवत् सर्वे स्मृतिकाराः बालिकामेव नग्निकाशब्दार्थमभिप्रयन्ति तेखलु भिन्नभिन्ना अभिप्रयन्ति तथाहि

अष्टमेतु भवेद्गौरी नवमे नग्निका भवेत् ।
दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ॥
प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता ।

इत्यादौ अप्राप्तरजसमेव कन्यकां नग्निकापदेन व्यपदिशन्ति इत्यादीनि वचनान्तराणि कानिचिद्विलिख्य अन्ततः इत्थंच अमरसिंहोक्तवचनेन महर्षिवचनपरामर्शाच्च अनग्निकाशब्दः ऋतुमतीमेव कन्यां बोधयतीति ।

अत्र ब्रूमः नग्निकाशब्दस्तावत् द्विविधः एको रूढः अपरस्तु यौगिकः रूढोयथा

अष्टमेतु भवेद्गौरी नवमे नग्निका भवेत् । इति यमः ।
दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपिवा गुणहीनाय नोपरुन्ध्याद्रजस्वलां । इति बोधा ।
प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता । इति वसिष्ठः ।

त्रिंशद्वर्षष्षोडशाब्दां भार्यां विन्देत नग्निकां। (भार)
इत्यादिस्मार्तप्रयोगैः नग्निकानागतार्तवेत्यमरसिंहोक्त्या च नवमवर्षा-दारभ्य आरजोदर्शनं अप्राप्तरजस्कां कन्यां रूढ्या बोधयति द्विती-यो नग्निकाशब्दस्तु नग्नशब्दात् सादृस्यार्थककप्रत्यये नग्निका इति भवति तत्र सादृश्यार्थककप्रत्ययप्रकृतिभूतः नग्नशब्दः वस्त्रधारण योग्ये वयस्यपि वस्त्रं विना स्थितं जनमाचष्टे नतु वस्त्रधारणानर्हे वयसि स्थितं अतएवामरकारोपि नग्नोऽवासादिगंबरइति ब्रवीति। मनुस्मृतावपि न नग्नः स्नानमाचरेत् (४ ४५) नग्नां नेक्षेत च स्त्रियं ४ ५३ इति नग्नस्नान नग्नस्त्रीदर्शनादिर्निषिध्यते यदि नग्नशब्दः द्वित्रिवयस्कां बालिकां वदेत् तदा तादृशापत्यं सर्वेपि दिनमनु अस-कृत् पश्यन्ति लाळयन्तिच तेषामपि तद्दोषनिवृत्यै पुनः पुनः प्राय-श्चित्तमनुष्ठेयं स्यात् तथाच नग्नशब्दः वस्त्रपरिधानयोग्ये वयसि सति या वस्त्रविहीना तामेव बोधयति तस्मात् सादृश्यार्थककप्रत्यये नग्नि-केति भवति। तच्च नग्निकापदं त्रिहायणीं चतुर्हायणीं वा बालां नग्नासादृश्यात् योगेनाभिदधाति तथाच यौगिकनग्निकाशब्दः अ-जातलज्जां अज्ञातगुह्यांगगूहनां चतुष्पथादृतपांसुक्रीडां बालिकां बोध-यतीति सिद्धं इममेव यौगिकनग्निकाशब्दार्थं मनसि निधाय

यावन्नलज्जितांगानि कन्या पुरुषसन्निधौ।
योन्यादीन्नवगूहेत तावद्भवति नग्निका॥
यावच्चेलं न गृह्णाति यावत्क्रीडति पांसुभिः।
यावद्दोषं न जानाति तावद्भवति नग्निका॥ इति वसिष्ठः स्मरति।

नमपि संगच्छते इदमपि व्याख्यानं ऋतुमतीमेव प्रतिपादयतीति मुधा क्लिश्यति विमर्शकारः । तथाच ऋतुमतीविवाहस्य द्वितीय-लिंगत्वेन प्रदर्शितं जैमिनिगृह्योक्तानग्निकापदमपि न लिंगं भवितु मर्हतीति वयोनिर्णयकारोक्तिरेव गरीयसीतरां ।

यत्तु तृतीयलिंगमुपन्यस्तं सर्वेषु गृह्यसूत्रेषु विवाहे दंपत्योः ब्रह्म-चर्यविधानात् ऋतुमत्येव विवाहितकन्या भवितव्या यद्यनृतुमती सर्वदा स्वतसिद्धब्रह्मचर्यस्य शास्त्रतो विधानस्य वैयर्थ्यं स्यात् । अतः ऋतुमतीविवाहे इदमपि ब्रह्मचर्यविधानं तृतीयं लिंगमिति प्रौढाविवा-हकारोक्तं वयोनिर्णयकारास्सप्रमाणमसंगतमिति निरूप्य अनृतुमती-विवाहेपि वरे अत्यन्तकामुके कदाचिद्ब्रह्मचर्यनियमभंगं जायेत एव कन्यायामपि चेष्टितुमारभेत तत्प्रवृत्तिर्महते दोषाय अतो ब्रह्मचर्य विधानमित्युक्त्वा कन्यागमने दोषबोधकं वचनद्वयं प्रादर्शयन् तच्च

**असंस्कृतां पुष्पहीनां कन्यां यो द्विजाधमः ।**
**रन्तुमिच्छति पापात्मा नरकं याति दारुणम् ॥** इति मार्कण्डेयः ।
**अप्रौढां कन्यकां विप्रो यभेत्कामातुरोऽन्वहम् ।**
**तस्यैव नरके वासः कानीनस्यात्तदुद्भवः ॥** इति देवलः ।

इदमेव वचनद्वयमनूद्य विमर्शकारः आद्यवचने इच्छन्निति पदसद्भावेन अविवाहितायामपुष्पवत्यां भोगेच्छया प्रवृत्तिमात्रात् दोषस्मर्यते तस्यां क्रियानिर्वृत्य शक्येत्यपि गम्यते इत्यवादीत् इदं न समीचीनं रन्तुमिच्छतीत्यनेन अपुष्पवत्यां रमणेच्छामात्रेण दारुण-नरकप्राप्तिर्यदि किमु वक्तव्यं कार्यनिर्वृत्तौ इत्येव युक्ततरोर्थः नहि कामान्धस्य शक्याशक्यविवेकस्संभवति गम्यविषयापि तादृशार्थ-बोधनस्याप्रकृतत्वाच्च

यद्यपि द्वितीयेतु वचने इत्यारभ्य अप्रौढां कन्यकामुपभुञ्जानस्य कामातुरस्य नरकवासापादकदुरितापूर्वोत्पत्तिः तस्यां कन्यायां जातस्य कानीनत्वं च स्मर्यते अत्र काम्युपभुज्यमानकन्याविशेषणतया श्रूयमाणस्याप्रौढाशब्दस्यापुष्टावयवा अनूढेतिवा अर्थपरत्वमेव न्याय्यं नापुष्पवतीवाचकत्वं वयोनिर्णयकारमन्तरेण क्वापि प्रौढापदस्य पुष्पवत्यां प्रयोगादर्शनात् योगरूढ्या परिणीतायां प्रसिद्धस्य ऊढापदस्य प्रोपसर्गमात्रेण कोशाभियुक्तप्रयोगादिकं विना अर्थान्तरकल्पनस्यान्याय्यत्वाच्च इति ।

इह किञ्चिच्चोदयामः अप्रौढापदस्य अपुष्टावयवा इत्यार्थाङ्गीकारे तस्य कोभिप्रायः किं अस्थूलावयवा इत्यर्थोवा उत अपूर्णावयवा इत्यर्थोवा अथ उभयार्थकोवा तत्र अस्थूलावयवा इत्येवार्थ इति तु शपथैकनिर्णयं यदि अपूर्णावयवा भवतु कामं कदा कन्यकानां पूर्णावयवत्वं संभवति ऋत्वनन्तरमेव नतु ततः प्राक् सत्स्वप्यवयवेषु अनृतुमतीत्वप्रयुक्तापूर्णैव सा अतएव वैदिककार्येषु श्राद्धादिषु परिवेषणादिक्रियायामपि तादृशकन्या नांगीकुर्वन्ति शिष्टाः यद्युभयार्थकत्वं तदानीमप्ययमर्थोभिसंध्यस्त्येव तथाचाङ्गीकृतेपि विमर्शकृदुक्तार्थे अप्रौढापदस्य वयोनिर्णयकारोक्तार्थ एव पर्यवस्यति किंतु साक्षात्तत्पदं विना पदान्तरेण बोधयत्ययं वयोनिर्णयेतु अनृतुमतीति स्पष्टं प्रतिपाद्यते ।

किञ्च प्रौढापदस्य ऋतुमतीत्वबोधकाभिप्रायेणैव तत्कालोचितसुविदितानङ्गविलासा अभिज्ञातदंपतीप्रेमकलहनिवारणकौशला इत्यर्थप्रतिपादनाय स्वविरचितपादारविन्दशतके वयस्यैव प्रौढा शिथिलयति या प्रेमकलहं इति श्रीकामाक्षीप्रसादपरिलब्धविद्याविशेषः

श्रीमूककविः प्रायुङ्क्त अत्र प्रौढापदस्य ऋतुमतीत्वानंगीकारे तत्कालो-
चितप्रेमकलहशिथिलीकरणादिसामर्थ्यं कथं घटेत अपिच अनेनैव
प्रौढाशब्देन पुल्लिंगे प्राप्तयौवनं आदृतविषयाभिलाषं सुतयुवत्यादि-
जन्यसौख्ये निषण्णं पुंमांसमभिप्रेत्य शिवापराधस्तोत्रे तत्रभवन्तः
श्रीजगद्गुरुशंकरभगवत्पादाः प्रौढोऽहं यौवनस्थो विषयविषधरैः पञ्च-
भिर्मर्मसंधौ दष्टोऽनष्टविवेकः सुतधनयुवतिस्वादुसौख्ये निषण्णः ।
इति व्यलेखिषुः एवमेव प्राप्ततारुण्येन विशेषशक्तिमानित्यभिप्रायेण
कविसार्वभौमेन भट्टनारायणेन वेणीसंहारनाटके प्रौढानेकधनुर्धरा-
रिविजये इति व्यलेखि लोकेपि पण्डितैः बहुभिः ऋतुमतीविवाह
इति स्थाने व्यवहृताः प्रौढाविवाहाः प्रौढाविवाहखण्डनमित्याद्या
स्सार्वजनीनाः [illegible] श्रीभगवत्पादप्रमुखाः प्रौढा-
पदप्रयोक्तारः [illegible] विमर्शकारनेकमन्तरेण सर्वेप्य-
पण्डितावा [illegible] प्रौढापदं प्रयुञ्जन्ति एवं
प्रौढापदेन [illegible] विराजमानेषु
आकर्णितद्विजवर्यशास्त्रनामग्रामश्रेणि [illegible]शब्दप्रपञ्चतत्वार्थ इव
वयोनिर्णयकारमन्तरेण क्वापि प्रौढापदस्य पुष्पवत्या प्रयोगो न
दृश्यत इति पर्यहासीत् पण्डितमानिविमर्शकारः हन्त एतादृशलेख-
नेन स्वयमेव स्वीयमज्ञानं प्रकटयाञ्चकारेत्यत्र किं वक्तव्यं विबुधानां
यत्तु कथंचित् अर्थसंपादनेपि कानीनस्यात्तदुद्भव इत्युत्तरार्धगतपुत्रो-
त्पत्तिसंभावनाविरोधो दुष्परिहरः नहि अदृष्टपुष्पा कन्या पुत्रं सूत
इति श्रुतदृष्टचरमिति उक्तं इह ब्रूमः कानीनस्स्यात्तदुद्भव इत्यनेन
कन्यारूपेणैव स्थित्वा या पुत्रं उत्पादयति मन्त्रेश्वरप्रसादादिना तदु-
द्भवस्य तस्य कानीनइति नाम अतएव कानीनः कर्णइत्युच्यते

अनृतुमत्यां कुन्त्या मंत्रप्रभावेण हि स जातः अतएव चंपुभारते अपुष्पवत्यामपि मे दशायां आमोदभारोधिकमाविरासीत् इति कुन्तीवचनं संगच्छते अवश्यं एतत् एवं अभ्युपगन्तव्यं नोचेत्

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषळी ज्ञेया तत्पतिर्वृषळीपतिः ॥ इत्याद्यनेकस्मृतिवचनैस्सह विरोधात् किञ्च सर्वत्र कन्यागमनेषु दोषं बोधयत्सु वचनेषु अविवाहितायां ऋतुमत्यामित्यर्थस्वीकारे अनृतुमतीगमने दोषो भवेद्वा नवा भवद्रीत्या तादृशदोषविधायकवचनाभावात् न दोषइत्येव वक्तव्यं एवंचेत् स्मृत्यर्थनिर्णयपरिपाटी अन्यादृश्येव स्यात् अतः कानीनस्स्यात्तदुद्भवइत्यस्य प्राक्प्रदर्शितरूपेणैवार्थो अभ्युपेयः अतएव

अशक्तामपि तां नग्नं कन्यां दद्यात्तथाविधि । (९-८८)
द्विवर्षात्प्रागेवारब्धं कन्यका मरणं यदि । इत्यादिवचनबोधितानृतुमतीवाचककन्यापदार्थैश्च न विरोधः यत्र क्वापि अर्थान्तरे यदि प्रयोगः लक्षणैव बोधः एवमेव महाभाष्यकारैः कैयटोपाध्यायैश्च कन्याशब्दो निर्णीतइति वयोनिर्णयकारैरुपपादितमर्थं संभ्रमकल्पितइति वदन् अयं व्याकरणमूर्धन्यः विमर्शकारः किंचिदजल्पीत् माभूत्तत्र निष्फलविचारइति विरम्यते मया ।

अपिच एवमेव अमरसिंहोपि कन्या कुमारी गौरी च नग्निकानागतार्तवा इति कन्याशब्दस्य अनृतुमतीवाचकमाचष्टइति वयोनिर्णयकारैः प्रमाणत्वेन प्रदर्शितमिदं वचनं अनूद्य विमर्शकारेण कन्या कुमारी गौरी तु नग्निकेति अमरसिंहस्य पाठः तुस्थाने चकारं परिकल्प्य स्वोक्तार्थे प्रमाणीकृतः अयमप्यसंगतमित्यादि वर्णितं ।

अत्र किंचिच्चोदयामहे अधुनातनेषु मुद्रितेषु केषुचित् पुस्तकेषु त्वन्तपाठदर्शनात् चान्तपाठः असाधुरिति कथं प्रतिज्ञातुं शक्यते नच मुद्रितपुस्तकेषु पाठव्यत्यासशंकाया अवकाश एव नास्तीति वाच्यं बहुषु च पुस्तकेषु वर्णपदवाक्यपद्यादीनामपि पाठव्यत्यासः भ्रंशश्च बहुधा अनुभूयतएव सर्वैः एवंच प्राचीने ताळपत्रात्मके चान्तपाठे सत्यपि मुद्रितपुस्तकस्थितत्वन्तपाठएव साधुरिति कथं निर्णेतुं शक्यते अपिच किं वयोनिर्णयकाराः स्मृत्यर्थनिर्धारणविषये अमरसिंहवचनं प्रमाणीकृत्य वा प्रावर्तिषत येन स्वानभिमतार्थबोधकमपि वचनं अन्यथा विपरिणमय्यापि प्रमाणत्वेन प्रदर्शयेयुः किन्तु स्मृत्यन्तरार्थपर्यालोचनयैव निरधारयन् एतदविरोधेन यद्यमरसिंहवचनं तदा प्राकृतजनतृप्त्यै तदपि व्यालिखन् नोचेत् न किंचिदपि गणयेयुः नागणनमात्रं अमरसिंहस्य प्रमादएवात्र विषयइतिच न्यरूपयन् स्पष्टमिदं नग्निकापदार्थविचारे वयोनिर्णयएव एवं मुक्तकण्ठं अमरसिंहवचनं असाध्वेवेति पूर्वं निरूपितं दृष्ट्वापि पाठविपरिणामेनापि अमरवचनं स्वसिद्धान्ताय प्रमाणीकुर्वन्ति वयोनिर्णयकाराइति विमर्शकृत्प्रतिपादनं साहसमात्रमेव। किञ्च अङ्गीकृतेपि त्वन्तपाठे भक्षितेपि लशुने व्याधिर्न शाम्यतइति न्यायेना निष्टार्थसिद्धिर्विमर्शकृतः तथाहि गौरीतु नग्निकेत्यत्र तुकारकरणेन गौरीशब्दाद्यः त्रयः अनृतुमतीवाचकाइति भवन्तु नाम कन्याकुमारी शब्दौ तु तत्पूर्वस्थितौ अनृतुमतीं ब्रुवातेवा उत ऋतुमतीं वेत्यत्र इतर मुखनिरीक्षणमन्तरा न निर्धारयितुं शक्यते तेन अस्मिन्नेवार्थे अनयोश्शक्तिरिति अनाविष्करणात् तथाच चक्रवर्ति रङ्गाचार्येण विरचिते लिंगाभट्टीयाख्ये व्याख्याने कन्या कुमारी इत्येते पदे अष्टम-

वयःपूर्ववयस्ककन्यके आचक्षाते इति व्याख्यातं नैव कन्या न युवतिरिति मनुरपि युवतेः प्राक् अनृतुमती कन्येति अभिप्रैति अष्टवर्षा भवेत्कन्येत्यादि स्मृत्यर्थपर्यालोचनेपि कन्यापदं अनृतुमती-मेव बोधयति अतः कन्याकुमारीशब्दौ अनृतुमतीवाचकावेव एवं स्थिते तत्वार्थे ऋतुमतीमपि कन्याकुमारीशब्दौ वदतः इति विमर्श-कारवचनं अत्यन्तप्रलपनमेवेत्यलमतिविस्तरेण तस्मात् पूर्वोक्तमार्क-ण्डदेवलकोक्तेन असंस्कृतां पुष्पहीनामिति, अप्रौढां कन्यकामितिच, वचनद्वयेनापि अनृतुमतीगमनएव दोषस्समर्यतइति सिद्धत्वात् यदुक्तं त्रिरात्रब्रह्मचर्यविधानाल्लिंगात् ऋतुमत्येव विवाह्येति प्रतीयतइतीद मखिलमप्यविचारितरमणीयमिति परास्तं।

यच्चोक्तं विमर्शकृता कन्यामप्रसक्तस्य अनेकदृष्टदोषहेतुभूतस्य व्यवायस्य स्मरणकीर्तनादितदङ्गैकदेशस्य वा वर्जनार्थं ब्रह्मचर्यविधान मिति वयोनिर्णयकारोक्तकल्पने सुदर्शनाचार्योक्तं मैथुने दुर्वारत्वं अतिप्रयत्नवर्जनीयत्वंचेति विशेषणद्वयमनर्थकमेव स्यात् तद्धि बालायां न दुर्वारं नातिप्रयत्नवर्जंचेति।

इदमसंगतं यदा शङ्कितं सुदर्शनाचार्योक्तदुर्वारत्वातिप्रयत्न-वर्जनीयत्वरूपविशेषणद्वयानर्थक्यमिति तदपि नहि कामान्धीकृतस्य जनस्य उचितानुचितसाध्यासाध्यविवेको जायते येन इयं बालिका नास्यां व्यवायकर्माचरितुं युक्तं असाध्यं चेति प्रतिषेधं विना निव-र्तेत स्थितमपि निषेधविधिसहस्रमुल्लंघ्य प्रवर्तन्ते अतिकामुकाः के चनेति किमु वक्तव्यं विदितवेदितव्यानां किंच तत्तादृशं अत्युग्र-तपोविशेषविमलीकृतस्वान्तं तपस्यन्तं कौशिकमपि हठादाकृष्य प्रा-कृतमिव चिरं क्रीडयांचकार रम्भया सह मदनहतकः, अविवेकइव

मूर्तिमति प्राकृते जने कथं कथं वा न प्रकटयेत् मास्त्वपाण्डित्यं, अतः सुदर्शनाचार्योक्ते विशेषणद्वयेपि न कोपि वैयर्थ्यशङ्कालेशावकाशः अन्यच्च विवाहचतुर्थदिने विधीयमानं समावेशनमेव ऋतुमतीविवाहे मूर्धाभिषिक्तं लिंगमिति वर्णितं खण्डयतां वयोनिर्णयकाराणां वचनमनूद्य विमर्शकार आह किन्त्वत्र बोधायनः ऋतुमतीविवाहानुकूलो दृश्यते इव एवं किल बोधायनस्सूत्रयामास विवाहकल्पोपदेशप्रकरणे अतः यदि कामयेत श्रोत्रियं जनयेयमिति आ-अरुन्धत्युपस्थानात् कृत्वा त्रिरात्रमक्षारलवणाशिनौ अधश्शायिनौ ब्रह्मचारिणावासाते इत्यादिकं निरूप्य अन्ततः सर्वत्र व्रतान्ते पक्वहोमउपसंवेशनं चेति प्रथम श्रवणे ततश्च यद्विना पुत्रोत्पत्तिफलकत्रिरात्रब्रह्मचर्यादिव्रतानि न फलोत्पादनाय प्रभवन्ति तादृश दृष्टद्वारभूतं उपसंवेशनं व्रतान्ते विधीयते तदपि कथमदृष्टैकफलकं स्यात् दृष्टे संभवति अदृष्टकल्पनस्यान्याय्यत्वात् तस्मादिह विधीयमानमुपसंवेशनं गुणवत्पुत्रोत्पत्तिफलं प्रति दृष्टद्वारमेवेति युक्तं प्रतिभातीति वर्णितं विमर्शे।

तत्र वदामः। यद्यत्रस्थितोपसंवेशनशब्दस्य ऋतुसमावेशनार्थबोधकत्वं तदा किञ्चिद्दृष्टद्वारकं प्रयोजनं संभवति तादृशार्थबोधकत्वमेव नास्ति संवेशनशब्दस्य स्वापार्थकत्वमेव अतएव संविशन्ति क्षपास्विति नीलकण्ठदीक्षिताः मनसस्संवेशश्चाखिलमत्यादिप्रयोगास्संगच्छन्ते उप इति समीपार्थकोपसर्गसमभिव्याहारेण समीपशयनमित्येव प्रतीयेत नतु पुत्रोत्पादनार्थकऋतुसमावेशनमिति अतएव सुदर्शनाचार्यः उपसंवेशनपदस्य उक्तसूत्रस्थ ऋतुसमावेशनवाचकत्वे ऋतुगादालिंगात् तादृशऋतुसमावेशनमेवेहानूद्यते नेदं पृथक्समावेशनमिति स्पष्टं विवृणोति तस्मात ऋत्वनन्तरक्रियमाणऋतुसमावेशनस्यांगतया

अदृष्टार्थमेवेह मन्त्रजपइति सिद्धं सत्यामपि ऋतुमत्यां अंगीकृतेपि विवाहचतुर्थदिने ऋतुसमावेशने यत् दृष्टफलत्वेन निरूपितं गुणवत्पुत्रोत्पादनं नाम न तत्फलं नियमेन द्रष्टुं शक्यते किं व्यवायक्रियानन्तरंवा उत दशमेवा मासे निश्चयेन गुणवत्पुत्ररूपं फलं लभन्ते लोकाः किन्तु तत्तत्कामनावेगनिवृत्तिमात्रं जायते फलन्तु अदृष्टायत्तमेव तस्मात् विवाहचतुर्थदिने विहिते समावेशने अदृष्टफलकल्पनापेक्षया दृष्टफलकल्पनं न्याय्यमिति कृत्वा ऋतुमतीविवाहे अंगीकृते गुणवत्पुत्रलाभरूपदृष्टफलसंभवात् तथैवांगीकरणीयमिति विमर्शकारोक्तिरत्यन्तमसंगतैव ।

यत्तु प्रथममन्त्रेण स्तोकोतिविवरणक्रियां विधाय अनन्तरसूत्रे सा यद्यश्रुकुर्यात् तामनुमन्त्रयतेत्यश्रुकरणं बालिकात्वे लिंगमिति वयोनिर्णयकारोक्तं तन्न तत्प्रथमप्रवृत्तौ लाज्जातिशयादिना कासांचित् अश्रुकरणसंभवाभिप्रायकत्वात् अतएव तत्र सा यद्यश्रुकुर्यादिति यदि शब्दश्श्रूयते । अन्यथा बालिकाया नियमेन अश्रुपातसंभवेन यदि शब्दो न निबद्धस्स्यान्मुनिना इत्यभाणि विमर्शकृता ।

इदमपि चिंत्यमेव तथाहि बालिकायाएव अविज्ञातविषयव्यापारतया अनुद्भूतगुह्यागुह्येन्द्रियविभागतया च रोदनस्य प्रसक्तिरेव नास्ति अत्यन्तखेदकरे कर्णवेधनादिकर्मण्यपि काश्चित् रोदनं न कुर्वन्ति किमुत अत्र स्तोकोतिविवरणाख्ये कर्मणि समुद्भूतलज्जाभरायाः विदितविषयरसायाः ऋतुमत्याएव तादृशकर्मणि नियमेनाश्रुपातं संभवेत् तत्पक्षएव यदि शब्दस्य वैयर्थ्यं न बालिकापक्ष इति स्पष्टमिदं सर्वेषामपि ।

यच्च गृह्यसूत्रेषु विवाहचतुर्थदिनापररात्रौ विधीयमानसमावेशनं लिंगमाश्रित्य ऋतुमतीविवाहं साधयामइति। तन्न तस्य मन्त्रजपमात्रपरत्वात् इति वयोनिर्णयोक्तमनूद्य समावेशनाश्रितावशिष्टानुवाकजपान् क्रियाविशेषानेककालकर्तव्यानेव विधत्ते तत्रान्तिममात्रस्य कालान्तरानुष्ठानेनखलु विज्ञायते प्रमाणमित्याशंकते विमर्शकारः। नैतादृशशंकाया अत्रावकाशः अत्र हि शेषं समावेशने जपेदिति समावेशनशब्दः उत्तरत्र विधीयमानऋतुसमावेशनस्यानुवादः क्रमजपार्थं क्रियते अस्य च कालान्तरफलदायकादृष्टजनकत्वेन तदङ्गभूतै एतज्जपरूपक्रियामात्रं समानकाले विधीयते नतु तदुत्तरं कार्यमपि तादृशार्थाप्रतीतेः असंभवाच्च। नच ऋतुमतीविवाहे कथमसंभवइति वाच्यं तस्य बहुस्मृतिवचनविरुद्धत्वात् अनेकगृह्यसूत्रानभिमतत्वाच्च अशास्त्रीयमिति प्रागेव निरूपितं अतएव सुदर्शनाचार्योऽपि अत्र त्यसमावेशनञ्च वध्वा सह मैथुनार्थं सह शयनं उत्तरत्र ऋतुलिंगादिति लिंगं प्रदर्शयति नहि स्वतः प्रमाणस्य श्रुतिवचनस्य अन्यश्रुतिवचनलिंगप्रदर्शनं युक्तं अनेन अत्रास्थितस्य क्रमजपार्थमनुवादइति स्पष्टं विज्ञायते। एवमेव सुदर्शनाचार्येणापि एतच्च रागप्राप्तसमावेशनाश्रितं विवाहकर्मार्थं क्रमजपयोः विधानमिति सदृष्टान्तं निरूपितं नच हरदत्तव्याख्यया युवतीविवाहोपि प्रतीयतइति वाच्यं इतरप्रमाणशिष्टाचारविरुद्धतया उपेक्ष्यैव सा अनृतुमतीविवाहं पक्षेऽङ्गीकुर्वतः विमर्शकृतो मतेपि एतादृशार्थएव शरणीकरणीयः नान्या गतिः एतेन समावेशनपदलिंगात् युवतीविवाहस्सिद्धतीति केषांचिदुरुक्तिर्दूरापास्ता किञ्च आण्डपिल्लयाराख्याचार्येणापि ऋतुमधिगम्य स्नातायां

समावेशनकाले विष्णुर्योनिमित्यारभ्य तम्भेवायोस्समृच्यतामित्यन्तेन वधूमभिमन्त्रयते यदि चतुर्थीसमावेशनं ऋतुसमावेशनं च युगपत्प्राप्नुतः तदारोहोरुमिति जपित्वा विष्णुर्योनिमिति वधूमभिमन्त्रयते इत्युक्तत्वात् अनृतुमतीविवाहएव तस्याभिमतइति बोध्यते तस्मिन्विवाहे कदाचित् कचित् दैववशात् अतर्कितोपन्नतस्य ऋतुसमावेशनस्य प्रसक्तिश्चेत् तदानीं किं क्रियतइति संदेहे प्राप्ते आह यदीति अयुवतीविवाहवत् युवतीविवाहोपि यद्यभिमतः तदा यदि युगपत्प्राप्नुत इत्यादिपदानां वैयर्थ्यं स्यात् एवं सर्वशास्त्रसंमतेनापि अनृतुमती विवाहएव शास्त्रीयइति सिद्धे हरदत्ताचार्यव्याख्यामेकामवलम्ब्य ऋतुमतीविवाहोपि शास्त्रीय इति स्थापनाय मुधा क्लेशमावहते विमर्शकारः ।

अन्यच्च शेषं समावेशने जपेदित्यत्र सुदर्शनाचार्यव्याख्याने पक्षान्तरं तु मुख्यं सिद्धमेव युवतीविवाहेषु तत्र रागोपि संभवति समावेशनञ्च नियतमेवेत्युक्त्वा एतेन आपस्तंबगृह्ये समावेशनविधिर्नास्ति अस्तीत्यधुनातनानां भ्रान्तिमात्रमित्यादिकं स्वदुरभिनिवेशमूलकं विमर्शकृतः प्रलपनमत्यन्तासंगतमिति गुरुचरणैः वयोनिर्णये सप्रपञ्चं निरूपितं ग्रन्थविस्तरभयात् पिष्टपेषणं माभूदिति मयेह न विचार्यते ।

यच्च चतुर्थीसमावेशनांगीकारेपि समावेशनपदं न व्यवायार्थकं किन्तु सह शयनार्थकमेव यदि ऋतुसमावेशनमभिप्रेतं स्यात् शेषं ऋतुसमावेशनइतिवत् अत्रापि ऋतुपूर्वमेव समावेशनमिति कुतो नोच्यते किं नागरिका मुनयः इत्यादिवयोनिर्णयकारवर्णितमनूद्य विमर्शकृता तेषामियं शैलीति दृष्टान्ताय केचनप्रयोगादर्शिताः (१) ऋतु

कालाभिकामी स्यादिति मनुरिति विषमोयं दृष्टान्तः। इयं शैलीत्यनेन यथान्यार्थकेन समावेशनशब्देन गुणवत्सन्तानोत्पत्तियोग्यव्यवायकर्माभिधीयते एवमन्यार्थकशब्देनान्यार्थप्रदर्शनं यदि भवेत् स दृष्टान्तो भवितुमर्हति ऋतुकालाभिगामीत्यत्र शक्यार्थं विना न कस्यापि अर्थान्तरस्य प्रतीत्यभावेन कथमिदं दृष्टान्ततामयात्। परंतु येतु समावेशनपदं सहशयनमात्रबोधकमिति वदन्ति। तेषामेवेदमनुकूलं तत्कथं समावेशनपदेन ऋतुसमावेशनपदं यद्यभिमतं तदा मुक्तकण्ठं ऋतुसमावेशनमित्येव ब्रूयात् यथा मनुः ऋतुकालाभिगामी स्यादिति ऋतुपदपूर्वकं प्रदर्शयति तादृशाभिप्रायाभावान्नतथा दर्शयतीति। यद्द्वितीयं दृष्टान्तवचनं तस्मिन् युग्मासुसंविशेदिति। (याज्ञवल्क्यः) इदमप्यसंगतं तत्र षोडशर्तुर्निशा स्त्रीणां तस्मिन् युग्मासु संविशेदिति वचनक्रमः तत्र तस्मिन्निति युग्मास्विति पदद्वयसमभिव्याहारात् ऋतुसंवेशनमिति स्पष्टं प्रतीयते। यद्येतत्पदद्वयसमभिव्याहारं विना संविशेदिति पदेन केवलं तादृशार्थप्रतीतिः प्राप्नुयात् दृष्टान्ततां सफलीभवेत् विमर्शकारप्रयासः तद्विपरीतबोधकेनानेन अनृतुमतीविवाहवादिनामेवाभिमतं सिद्ध्यति एवंजातीयकानि त्रिचतुर्वचनानि निजाभिमतार्थसाधकानीति भ्रमेण एतद्दृष्टान्तप्रदर्शनेन समावेशनपदस्य ऋतुमतीसमावेशनमेवेति स्वमनसि दृढतरं निश्चित्य विमर्शकारः समावेशनशब्दस्य सहशयनमात्रसंपादने परिकरबन्धो न समुचितइव वयोनिर्णयकृतामिति स्वपाण्डित्यं प्रकत्यकार्षीत्॥

यत्तूक्तं विमर्शकारेण वस्तुतस्तु आपस्तंबगृह्यपरामर्शे ऋतोः प्रागेव स्त्रीणां विवाहइति स्पष्टं निश्चयकरणमस्तीत्यादिना गृह्यसूत्रेषु

कन्यालक्षणकोटौ युवतिभावो न परिगण्यते प्रत्युत रातां पाली इत्यादिना (रातां रमणशीलां ऋतुस्नातां वा इति व्या) ऋतुस्नाता प्रतिषिध्यते तद्विरोधितया विवाहचतुर्थदिनसमावेशनकथनं भ्रान्तिमात्रमित्युन्मीलितं प्राक् तस्मात् सर्वथा ऋतुमतीकन्याविवाहे वर्जनीयेति आपस्तंबमतमिति यद्वयोनिर्णयकारोक्तं तत् अविमृश्य गदितं स्त्रीषु कादाचित्कमार्तवं गुणकोटौ वा दोषकोटौ वा नान्तर्भवितुं शक्यं तस्य दोषतया गुणतया वा अकथनं असति शास्त्रान्तरविरोधे तद्वत्याः परिग्रहे परित्यागे हेतुर्नस्यादिति च तैरेव गृह्यविचारारंभे निर्णीतं इह तु तद्विरुद्धमभिधीयते गुणकोटौ न कीर्त्यतइति च प्रतिपाद्य युवतीपर्युदासविरोधिचतुर्थीसमावेशनञ्च प्रतिरोपितमेवाधस्ताज्जागर्ति तस्मात् सुदर्शनाचार्यस्य द्वितीयं व्याख्यानमन्याभिप्रायकमित्येव वक्तव्यमिति।

इदं सर्वमज्ञानमूलकं तथाहि गृह्यार्थविचारे वयोनिर्णयकारैः ऋतुमत्याः किं लक्षणमितिचेत् नैतदनुगतरूपेण वक्तुं शक्यं यथा गौरी कन्यादिलक्षणं एकरूपेण वा मतभेदेन वा इयद्धायनीस्त्र्येवेति निर्णेतुं शक्यते तथा अनिर्धारितकालविशेषजन्यस्य ऋतुमतीत्वस्य क्वचिद्रोगेण जन्मान्तरीयपापाधिक्येन वा कालविशेषेष्वजातस्य ऋतुमतीत्वस्य इदन्तया लक्षणकल्पनमशक्यमिति प्राक प्रत्यपादि इहतु गृह्यसूत्रेषु कन्यालक्षणकोटौ (अत्रस्थलक्षणशब्दो निमित्तपरः) यथा सन्निपातलक्षणो विधिरनिमित्तमित्यादौ वैय्याकरणैराश्रीयते एवं। तथाच विवाहयोग्यकन्याकानिमित्तपरिगणनकोटौ युवतिमपि न परिगणयन्तीत्यर्थः नतु युवतिभावानुगतसमयलक्षणमित्यर्थः तथाचनैतद्विरुद्धं स्यात् एतेन विमर्शोक्तिरेव विरुद्धा वेदितव्या ।

अपिच अत्रैव किञ्चेत्यारभ्य अत्र ऋतुमती सर्वथा न विवाह्येत्यर्थकरणे वर्षकारिपदव्याख्याविरोधो दुष्परिहरः तत्रैवहि दत्तां गुप्तामित्यादिके सूत्रे चरमं वर्षकारीति पदं वरात् वर्षेणाधिका या अत्यन्तं स्रवति सा वा इति सुदर्शनाचार्यः व्याचख्यौ अत्यन्तस्रावश्च दुष्टरजसएव कन्याया धातुक्षोभवशात् संभवति यदि ऋतुमत्येव सर्वथा न विवाहमर्हतीत्यभिप्रायः स्यात् व्याख्यातुः कथमत्यन्तस्रावयुक्ता न विवाह्येति व्याख्या संगच्छेत तस्मात् एतद्व्याख्यावष्टंभेन ऋतुमती कन्याविवाहे प्रतिषिध्यते इत्ययमर्थः सर्वथा न सिध्यतीति ।

अत्र प्रतिकथयामः किञ्चेत्यारभ्य न सिध्यतीत्येतावद्वर्णितं व्याख्यानमेकमेवालं ऋतुमतीविवाहश्शास्त्रीयइति स्थापनाय दृढतरविधृताग्रहस्य विमर्शकृतः गृह्यतद्व्याख्यार्थाविष्करणे अन्यादृशं मतिकौशलमित्यत्र तथाहि दत्तां गुप्तामिति सूत्रावसाने वर्षकारीं च वर्जयेदिति आपस्तंबेन गदितं तस्य वर्षकारीपदस्य हरदत्ताचार्येण वरजननादूर्ध्वमल्पीयसि काले जाता । तस्मिन्नेव संवत्सरे जातेत्यन्ये । वर्षेणाधिका वर्षकारी । स्वेदनशीलेत्यन्ये । इति व्याख्यातं सुदर्शनाचार्यस्तु वर्षकारी वरात् वर्षेणाधिका । केचित् वरजन्मसंवत्सर एव पश्चाज्जाता । या अत्यन्तं स्रवति सा वा इति व्याचष्टे । अत्र या स्वेदनशीलेत्यन्यइति हरदत्तव्याख्यानुसारेणार्थे अङ्गीकृतेपि वाह्यसर्वशरीरनिष्ठघर्मापरपर्यायरोगयुक्तां वर्जयेदित्येवार्थो न्याय्यः अत्यंत स्रावश्च दुष्टरजसएव कन्याया धातु क्षोभवशादिति विमर्शकृदुरभ्यूहस्य न किंचिदप्यत्रावकाशः एवं पूर्वं परमनालोच्य स्वाभिमतार्थ प्रतिपादनकौशलं वयोनिर्णयकाराणां कथं भवेत् ईदृङ्नवीनव्याख्या

रीत्या व्याख्यानस्य ऋतुमतीविवाहश्शास्त्रीयइति स्थापनाय कुत्रवा प्रमाणं नोपलभ्येत एतद्रीत्या वयोनिर्णयोक्तं असंगतमेव स्यादित्यलमधिकेन । अपिच विवाहकर्मपरिसमापनानन्तरं यदामलवद्वासा स्यादित्यादिसूत्रेण यस्मिन् काले विवाहिता वधू रजस्वला भवति तदा तस्यै श्रुत्युक्तान् (तैत्त २-५) रजस्वलाधर्मान् वरेणोपदेष्टव्यानापस्तंबो विधत्ते इदञ्च धर्मोपदेशाविधानं ऋतुमतीविवाहवादेनैवोपपद्यते इत्यादिगृह्यव्याख्यासमये सुदर्शनाचार्येण यद्विवाहचतुर्थापरराात्रएव कदाचिदृतुसमावेशनमपि कर्तव्यतया प्राप्नोतीत्युच्यते । तस्मिन्नेव समये यदि दैवादृतुसमावेशनमपि कर्तव्यं स्यात् तदा पूर्व'मारोहोरु'मित्यादि जपः ततो विष्णुर्योनिमित्यादिभिरभिमन्त्रणमिति नैतदृतुमतीविवाहाभिप्रायेण किंत्वापत्कल्पेन । तत्र यदि दैवादिति दैवपदग्रहणादितिच यदुक्तं वयोनिर्णयकारैः तत्खण्डनधिया विमर्शकारेण किमपि जल्पितमपि न तस्य तत्खण्डनयोग्यता । किन्तु अनृतुमतीविवाहस्य साधकं भवेदितीदमापातदर्शनमात्रेणैव स्पष्टं प्रतीयतइत्यतो न मयेह विचार्यते । तथाच मनुयाज्ञवल्क्यपराशरादिमहर्षिनिचयप्रकाशितानां स्मृतीनां बोधायनापस्तंबादिविरचितगृह्यसूत्राणां च तटस्थधिया तात्पर्यपर्यालोचनं विप्रकन्यानां विवाहस्य गर्भात् जन्मतोवाष्टमं वयः मुख्यः कालइति ततःपरं रजोदर्शनात्पूर्वमेव गौणोपि कालइति नतु ऋत्वनन्तरमपीतिच स्पष्टतरं विज्ञायते । इत्थं अनृतुमत्याएव विवाहकरणं निखिलशास्त्रसंमतं अखिलास्तिककुलापरिगृहीतं आचारप्रसिद्धं ऐहिकामुष्मिकश्रेयोनिदानं अपवर्गफलप्रदमिति विभावनीयं सुधीरिति सिद्धम् ।

इत्थं श्रीगुरुराजपादयुगळीशुश्रूषयाप्तोज्वल-
त्काटाक्षङ्कुरलेशलब्धधिषणाभाजा मया निर्मिते ।
ग्रन्थेऽस्मिन् यदि चाल्पकोऽपि सुगुणः सश्रीगुरूणामिति
क्षन्तव्या इतरेच दोषनिवहा मत्का इति प्रार्थये ॥

इति श्री प. पञ्चापगेशशास्त्रिविरचित श्रीवयोनिर्णय
भावप्रकाशिकायां गूढार्थविचारनामकं तृतीयं
प्रकरणं सम्पूर्णम् ॥

---

# वयोनिर्णयभावप्रकाशिकानुबन्धाख्यं चतुर्थं प्रकरणम् ।

क्षोणीदेव सुता विवाहसमयः शास्त्रोदितः प्रागृतो
रित्येनं समयं विहाय चरतां पश्चादृतोः स्वेच्छया ।
दोष स्स्यादिति रौरवादिफलदो ये बोधयन्ते भृशं
ते कुर्वन्तु पराशरादिमुनयोऽस्माकं धियं निर्मलाम् ॥

विमर्शानुबन्धे अत्रोच्यत इत्यारभ्य यद्येवं सर्वाणि ऋतुमती विवाहशास्त्राणि ब्राह्मणमात्रविषयाणि भवन्ती त्येष्टव्यानि तर्हि क्षत्रियादीनां प्रतिषेधएव नस्यात् ऋतुमतीविवाहे अनेवंविध वच-नान्तरानुपलम्भात् अभ्यनुज्ञानार्थं मन्वादिशास्त्रंतु अनालम्बनमेव स्यात् प्रतिषिद्धेहि वस्तुनि अभ्यनुज्ञा स्वारसिकी इत्यादि वर्णितम् ।

*अत्र विचारयामः—*

उद्वहेद्यस्तु तां कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो ह्यपाङ्क्तयस्स विप्रो वृषलीपतिः ॥ (अंगिराः)
यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।

इत्याद्येषु ऋतुमतीविवाहनिषेधपरेषु वचनेषु ब्राह्मणपदोपादानेन इत्थ मेवा त्रार्थो वर्णनीयः त्रीणिवर्षाणी त्यादिवचनबोधितऋतुमतीविवाह करणं यदि ब्राह्मणानामपि तदा उद्वहेदित्यादिवचनेषु ब्राह्मणपदस्य वैयर्थ्यमेव स्यात् तत्र विनापि तत्पदं ऋतुमतीविवाहव्याहृभि-र्यादृशोर्थ इदानीं वर्ण्यते तादृशार्थस्य प्रतीतेः यदि ऋतुमतीविवाह-निषेधबोधकेषु बचनेषु ब्राह्मणपदं नक्रियते तदा सामान्यरूपेण स्थितानां तद्वचनानां त्रीणिवर्षाणीति वर्षत्रयं दोषाभावं बोधयन्ति

विशेषवचनानि बाधकान्येव भवेयुः उपादीयमानंतु ब्राह्मणपदं व्यर्थं सत् त्रीणिवर्षाणीत्यस्य बाधकं भवति नतु ऋतुमतीविवाहप्रतिषेधः ब्राह्मणमात्रविषयइति तत्र क्रियमाणब्राह्मणपदस्य त्रीणिवर्षाणीत्यस्य बाधनेन सामर्थ्यस्योपक्षीणत्वात् तथाच बाधकबाधनमिति फलितं। एतदभिप्रायेणैव भावप्रकाशिकायामपि उत्सर्गापवादन्यायेन त्रीणि वर्षाणीत्यादिवचनानि ब्राह्मणजातिव्यतिरिक्तविषयाणीत्यपि निरूपितानि नच उद्वहेद्यस्तु तां कन्यां ब्राह्मणो मदमोहित इत्यादिवचनस्य ब्राह्मणपदेन तज्जातीयानामेवेति कथं नस्यादिति वाच्यं तथासति त्रीणिवर्षाणीत्यादि वचनानां वैयर्थ्यापत्तेः एवंच ऋत्वनन्तरं वर्षत्रय प्रतीक्षणं ब्राह्मणजातिभिन्नानामेवेति दृढीकृतं अतएव प्रदानं प्रागृतो रिति (गौतमः) अपिवा गुणहीनाय नोपरुन्ध्याद्रजस्वलामित्यादि वचनार्थश्च स्वरसतस्संगच्छते।

अथवा सन्तु ऋतुमतीविवाहप्रतिषेधशास्त्राणि ब्राह्मणमात्रविषयाणि तावतापि नेष्टसिद्धिर्भवतः नच तेषां ब्राह्मणमात्रविषयत्वे एवंविध निषेधबोधकवचनान्तराभावात् ऋतुमतीविवाहबोधनपरमन्वादिशास्त्रस्य वैफल्यं स्यादिति वाच्यं तादृशशास्त्रंतु नियमार्थमिति ब्रूमः। तत्कथमिति चेत् सिद्धेसत्यारम्भो नियमार्थमिति न्यायेन प्रमाणान्तरेण स्वतएव सिद्ध्यस्यास्य पुनर्विधानं नियमार्थं तेन स्वतास्सिद्धोपि ऋतुमतीविवाहः त्रिवर्षपर्यन्तं नातः परस्मिन् काले कर्तव्यइति कालान्तरविवाहकरणव्यावर्तनेन नियमफलंच सिध्यति तथाचाङ्गीकृतेपि निषेब्राह्मणमात्रपरत्वे न मन्वादिशास्त्राणामनालंबनमिति सिद्धं।

गृह्येषु विवाहचतुर्थदिने विधीयमानसमावेशनस्य सहशयनमात्रं मन्त्रजपमात्रंवा तेषामभिप्राय इत्यादिकं सप्रपञ्चं प्रकाशिकायां प्रति-

पादितमस्माभिः तस्मात् स्मृतिगृह्यसूत्रार्थानां सम्यक्पर्यालोचने ऋतोः प्रागेव विप्रकन्यानां विवाहश्शास्त्रीयइति त्रीणिवर्षाणीत्यनेन विधीयमानं ऋत्वनन्तरवर्षत्रयप्रतीक्षणंतु विप्रेतराणामिति निश्चयेन प्रतीयमाने गृह्योक्तसमावेशनादिविरोधसंभवात् पक्षे ऋतुमतीविवाहोङ्गीकरणीय इति विमर्शानुबन्धोक्तं दुराभिनिवेशमूलकमिति परास्तम् ।

ननु संगच्छतां कामं विमर्शकृतव्यवस्था तथापि नसिद्ध्यत्येव रजोदर्शनानन्तरं विवाहः कन्यकानां पराशरस्मृतिविरोधस्य परिहर्तुमशक्यत्वात् तत्राहि स्मृतौ कन्यकानां विवाहात् प्राक् रजोदर्शने पितृमातृभ्रातॄणां नरकपातश्श्रूयते इत्यादि सप्रपञ्चं पराशरस्मृतिवचनानि निरूप्य मध्ये इतरस्मृतिपुराणवचनविरोधेसति एतदर्थो नग्राह्य इति च कानिचिद्वचनानि विलिख्यान्ततः एवंच पराशराभिहितः कन्यकानां ऋतोः प्रागेव विवाहः प्रशस्त इति सिद्ध्यति सच नकयाचिदपि स्मृत्या विप्रतिपद्यते मन्वाद्यभिमतो गौणकालस्तु नानया स्मृत्या प्रतिषिद्ध्यते इतिच किञ्च अत्र स्मृतौ शुद्धिं प्रकृत्य कन्यायाश्शुद्ध्यशुद्धी प्रतिपादयितुं पठितानीमानि वचनानि स्मृत्यन्तरसंवादं विना नसम्यक् स्वार्थप्रकाशनेऽलं भवतीतिच विमर्शानुबन्धे वर्णितम् ।

अत्र प्रतिवदामः, पराशरस्मृतौ तावत्

**अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ।**
**दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वलेति ॥ ७—६**

अत्र अतऊर्ध्वं रजस्वलेति चतुर्थपादस्थरजस्वलापदं गौरीरोहिण्यादिपदवत् रूढ्या कांचित् संज्ञां बोधयतिवा आहोस्वित् यौगिकेन प्रादुर्भूतरजस्का मभिदधाति वा नाद्यः उपस्थितार्थस्य बाधं विनाऽन्वयसंभवे तं परित्यज्य रूढ्याश्रयणे मानाभावात् कथं बाधसंभाव इति चेदु

च्छते एकादशे वर्षे दृश्यरजोहेतुभूता दृश्यान्तरुद्भूत रजोविशिष्टेत्यर्थ मग्न न्तरनुद्भूतं रजः बहिः प्रयातुमीष्टे येनेतादृशार्थकथन मसंगत मिति शंका जायेत न चानेन रजस्वलापदेन दृष्टरजस्केत्यर्थः कथं न स्यादिति वाच्यं अस्य पदस्य तादृशार्थकथनमपि युक्तमेव तथापि तन्न न भवति तत्कथं उत्तरवचने 'प्राप्ते द्वादश वर्षे तु यः कन्यां न प्रयच्छयति । मासि मासि रजस्तस्याः पिता पिबति शोणितमिति' द्वादशवर्षएव मासि मासि समुद्भवति रजः ततः प्रागेव ताम प्रयच्छ- न् पिता तदानीं तद्रजः पिबती त्युक्तत्वेन तदानीमेव दृष्टरजस्का भवती त्यनेन बोध्यते अतः एकादशे वयसि रजस्वलापदेन व्यवहृता पि भाविदृश्यरजोभावयोग्यान्तर्जातरजस्केत्यर्थ एव न्याय्यः 'तेन

विवाहं चोपनयनं स्त्रीणामाह पितामहः ।
तस्माद्गर्भाष्टमः श्रेष्ठः जन्मतो वा ष्टवत्सरः ॥ व्याघ्र)
वैवाहिको विधिस्त्रीणा मौपनायनिकः स्मृतः ।
स्त्रीणा मुपनयस्थाने विवाहं मनुरब्रवीत् ।

इत्यादिवचनै रुपनयनस्य मुख्यकालत्वेन निरूपित मष्टममेव वयो भवति तत्स्थाने विधीयमानविवाहस्यापि तादृशएव कालो मुख्यः मुख्यकालेऽनुष्ठातुं न शक्यते चेत् ततः परं एकादशवयःपर्यन्तमेव गौणकालस्याप्यवधिः द्वादशे दृष्टरजस्का भवेत् ततः पूर्वएव वयसि अन्तरुद्भूतरजस्कापि यावन्न दृष्टरजस्का भवति तावदेव गौणकालिक विवाहो प्यवश्यं कर्तव्य इत्याह अत ऊर्ध्वं रजस्वलेति अमुमेव गौणकालं 'त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीमिति' वचनेन द्वादशवयः पर्यन्त मभिप्रैति मनुः । शरीरभेदेनायमभिप्रायोपि सं- भवेदेव एतत्सर्वमनुसृत्यैव 'प्रदानं प्रागृतोरिति गौतमधर्मे')

प्रयच्छेन्नग्निकां कन्यां मृतुकालभयात्पिता । (यम) इति ।
पितुर्वेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः ॥(अंगिराः)इति।
प्रयच्छेन्नग्निकां कन्यां मृतुकालभयात्पिता । (वसिष्ठ):इति।
रजस्वला च या कन्या यदि स्याद्विवाहिता ।
वृषली वार्षलेयः स्यात् जातस्तस्यां स चैवहि ॥(लघु)इति।
इत्येवं जातीयकै र्बहुभि स्स्मार्तवचनैः अष्टमादूर्ध्वं रजोदर्शनात् पूर्व मेव गौणमपि विवाहकर्माचरणीयमिति मुक्तकण्ठं विधीयते तथाच पराशरेणापि एकादशवयःपर्यन्तमेव विवाहस्य कालइति अतऊर्ध्वं रजस्वलेत्यनेन ज्ञाप्यतेऽन्यस्मृत्यनुसारेणेति स्पष्टं एतेन एवञ्च पराशराभिहितः कन्यकानां ऋतोः प्रागेव विवाहः प्रशस्त इति सिद्ध्यतीति विमर्शानुबन्धोक्तिरसंगतैव अपिच अतऊर्ध्वं रजस्वलेत्यस्य एकादशे वयसि दृष्टरजोविरहेपि अन्तः पुष्पमुत्पद्यत इति वयोनिर्णयोक्तं किमिदमन्तःपुष्पं बहिःपुष्पमित्यादिपरिहासोक्त्या स्वीयाज्ञान ग्रन्थिमेव प्रकटयतितरां विमर्शकारइत्यलमधिकेन ।

किञ्च प्रकरणं चेदं शुद्ध्यशुद्धिकथनाय प्रवृत्तं न विवाहकाल विधानायेत्यपि प्रतिपादितम् ।

अस्य कोभिप्रायः अथ विवाहप्रकरणमारभ्यत इत्यनुक्त्वा शुद्ध्यशुद्धिकथनाय प्रवृत्तेऽस्मिन् प्रकरणे पठितै र्वचनैः विवाहकाल निर्णयो न कार्य इति वा उत काशुद्धिः अशुद्धिः केति सन्देहे तन्निश्चयाय परमिदं प्रवृत्तमिति वा अथवा नैतत् प्रकरणं वैदिकैरादरणीयमिति वा यद्वा इतरस्मृतिवचनै स्साकमस्य विरोधात् नेदमंगीकरणीयमिति वा नाद्यः प्रधान्येन यस्य कस्य चिद्विषयस्य कथनाय प्रवृत्ते

प्रकरणे मध्ये प्रकरणार्थाविरोधं प्रमाणान्तराविरुद्धं च यदि विषया न्तरमुच्यते तन्नग्राह्यमिति शपथयितं कथं शक्येत न द्वितीयः शुद्ध्य शुद्धिबोधकशास्त्रस्य किं प्रयोजनं शास्त्राणांतावत् साक्षात् परंपर यावा प्रवृत्ति निवृत्त्यन्यतरार्थबोधकत्वमवश्यमंगीकरणीयं तथाच एत त्प्रकरणस्थेन अतऊर्ध्वं रजस्वलेत्यनेनापि एकादशवयः पर्यन्तमेव सा शुद्धा तस्मिन्नेव वयसि वैवाहिकं कर्म समाचरणीयं नातःपरमिति बोध्यते अतएव एवमदातुः पितुः प्राप्ते द्वादशवर्षे इति वचनेन दोषा· धिक्यं विधीयते न तृतीयः तथा प्रामाणिकैरनभ्युपगमात् किञ्च प्रकर· णस्यैवास्य वैयर्थ्यापत्तेः न तुरीयः तादृशविरोधस्य प्रसक्तिरेव नास्ति।

अपिच पूर्वं मनुस्मृतिविचारसमये 'अत ऊर्ध्वं प्रवक्ष्यामि योषितां धर्ममापदि' त्युपक्रम्य तन्मध्यपठितं त्रीणिवर्षाण्युमती ति वचनं स्वीयरजस्वलाविवाहस्थापनाय सकरबोधं मूर्धाभिषिक्तप्रमाण· त्वेन विलिखतो मेधाविनः अत्र यादृशशङ्का समुद्भूत् एवं त्रीणि वर्षाणीति वचनं न विवाहप्रकरणस्थं किन्तु आपद्धर्मबोधकप्रकरणस्थ मिति शङ्का कुतो न जायेत तद्वचनेन स्वाभिमतार्थसिद्धिरिति भ्रमः एत- द्वचनांगीकारे निजानभिमतसिद्धिर्भवतीत्येतद्विना न कारणान्तरमुत्प- श्यामः अहो रजस्वलाविवाहस्थापनरूप धर्मकार्येऽभिनिवेश स्सुहृदः।

किञ्च अनेनैव विमर्शे पराशरस्त्वित्यारभ्य एतान्येव वच- नानि तत्रापि विलिख्य अन्ततः यद्यपि संप्रतिपन्नतया निर्दिष्टासु स्मृतिषु इयमेकैव स्मृतिः रजोदर्शनात् प्राक् विवाहाकरणे कन्यायाः तत्पित्रादीनां तद्द्रोढुश्च दोषमात्रं प्रतिपादयति न त्रिवर्षादिरूपं गौण कालमिति व्यलेखि तथाच विमर्शानुबन्धोक्तस्य प्रकरणमिदं शुद्ध्य- शुद्धिकथनार्थमित्यस्य कोऽभिप्राय इति स एव प्रष्टव्यः।

एवंच पराशरस्मृत्यापि ऋतुमतीविवाहोऽशास्त्रीय इति महते दोषायेति च स्पष्टमावेद्यते अतो विमर्शानुबन्धवर्णितमखिलमसंगतमेव

इदमपीह ऋतुमतीविवाहमंगीकुर्वतामपरिहार्यमनर्थान्तरं दृढी-भवति तथाहि सर्वैरपि स्मृत्यादिभिः निषिध्यमानस्य ऋतुमतीविवाहस्या नुष्ठानं महते दोषायेति बहोः कालादारभ्य प्राञ्चः सर्वेपि पण्डितवरा ऐककण्ठ्येन ऋतोःप्रागेव स्व स्व कन्यकानां वैवाहिकं कर्म समाचर-न्निति तमेव पन्थान मनुसरद्भि राधुनिकै रास्तिकनिकरैरपि तथैवानुष्ठा-नेन 'आचारस्यैव साधूना मात्मनस्तुष्टिरेवच' इति (मनुः) धर्मज्ञसमयः प्रमाणं इति (आपस्तंबः) आचारः प्रथमो धर्मः इत्यादिवचनै राचार-स्य मुख्यत्वेन परिगणनात् तादृशशिष्टाचारविरुद्धस्तत्सिद्धान्त इति नच भवतु शिष्टाचारस्य प्रामाण्यं शास्त्राविरुद्धस्यैव तस्य प्रामाण्यं नतु तद्विरुद्धस्यापीति वाच्यं एतादृशाचारएव शास्त्राविरुद्ध इति भावप्रकाशिकायामुपपादितत्वात् किञ्च तुष्यतु न्यायेन रजस्वलाविवाह स्थापने बद्धकङ्कणस्य भवतो मतेऽङ्गीकृतेपि न शिष्टाचारस्य दौर्बल्यं तत्कथं भवता किञ्च शास्त्रैरेकान्तेन ऋत्वनन्तरमेव विप्रबालिकानां विवाहाख्यं कर्म करणीयमिति न बोध्यते किन्तु ऋतोःप्रागेव विवाहस्य मुख्यः कालः तदनन्तरमपि गौणकालः वर्षत्रयमभ्यनुज्ञायत इति सिद्धान्तितं तद्रीत्या ऋतोः पूर्वकाले ततःपरं वर्षत्रयरूपकालविशेषे च विवाहकरणं शास्त्रीयमिति फलति तथाच शास्त्रेण उभयथा काले बोध्यमानेपि कतरः कालो ग्राह्यइति सति सन्देहे यत्राचारस्स्वकुलीनैः पूर्वैः परंपरयापरिगृहीतः सएव ग्राह्यः तथाच वैद्यनाथदीक्षितीये वचनं।

यत्र शास्त्रगतिर्भिन्ना सर्वकर्मसु भारत ।
उदिते त्नुदिते चैव होमभेदो यथा भवेत् ॥

तस्मिन् कुलक्रमायातमाचारं चाचरेद्द्विजः ।
स गरीयान् महाबाहो सर्वशास्त्रोदितादपि । इति ।

अनेन उदितानुदितन्यायेन उभयथा शास्त्रेण बोधिते स्थले स्व स्व कुलाचारानुगुण्येन व्यवस्था कल्पनीयेति स्पष्टं प्रतीयते तथाच प्रकृत विषये आचारः कथमिति चेत् अतोः पूर्वमेव विप्रकुलीनानां विवाह कर्माचरणमिति सार्वजनीनः पन्थाः एवञ्च रजस्वलाविवाहवादिमतेपि आचाररूपबलवत्प्रमाणान्यथाकरणस्याशक्यतया यद्वर्णितं विमर्शानुबंधे आचारदौर्बल्यमित्यादितत्सर्वं सभ्रमकथितमिति विभावयन्तु विबुधाः ॥

कृत्वादौ च विमर्शनामककृतिं पश्चाद्विचिंत्य स्वयं
दोषोद्घाटनपूर्वकं विरचयन् शङ्कां च किंचित्ततः ।
यां यां स व्यतनोत् समाधिमधुना तासां समासामपि
प्रोक्तं खण्डनमस्तु पण्डितमनःपद्मस्य चण्डद्युतिः ॥

शुभमस्तु ।

इति श्री महामहोपाध्याय, वेदान्तकेसरिनामकबिरुदद्वयेदेदीप्य मानानां, श्री मदद्वैतसभापरिष्कृतानां ब्रह्मश्री प. गणपति शास्त्रिणा सोदर्येण श्री काञ्चीकामकोटिपीठाधिप श्री जगद्गुरुशङ्करभगवत्पादाचार्यवर्यैरगण्यपुण्यपुञ्जलभ्य स्याव्याजानुग्रहविशेषस्याग्रभाजनीकृतेन तदी- यास्थान पण्डितेन प. पञ्चापगेशशास्त्रिणा विरचितेषु ग्रन्थेषु वयोनिर्णयभावप्रकाशि- काया प्रकाशिकानुबन्धाख्यं चतुर्थं प्रकरणं समाप्तम् ।

॥ ग्रन्थश्च समाप्तः ॥

श्रीरस्तु

द्विजकन्या

# विवाहकालविमर्शानुबन्धः ।



BRAHMAVADIN PRESS, MADRAS.

(श्रीगुरुभ्योनमः)

सा न स्तनोतु कुशलं कुलशैलकन्या
कण्ठे शिवस्य वरणस्रजमर्पयन्ती ।
उत्क्षिप्तबाहुयुगळा निजबाहुमूल
लोलेक्षणं शिवमवेत्य विनम्रवक्त्रा ॥

कन्याविवाहकालविमर्शने कांश्चिदत्र सुहृदुदितान् ।
दोषाननूद्य कलये समाहितिं यावदस्ति मतिरिह मे ॥

अस्ति किल मया विरचितः कन्याविवाहकालविमर्शो नाम ग्रन्थः । तत्र मे सुहृदः केचिदाविष्कुर्वते दोषान् । तान् यथामति प्रतिवक्तुं प्रयत्यते ।

(1) अत्र प्रथमं तावत् विमर्शकृतं स्मृतिवचनानां विषय व्यवस्थापनमेव न सङ्गतं मन्यन्ते केचित् । तथाहि, विमर्शे खलु ऋतुमतीविवाहनिषेधबोधकानि संवर्तादिवचनानि वर्षत्रयाऽभ्यनुज्ञापरमन्वादि वचनसार्थक्याय, गुणवति वरे लभ्यमानेऽप्यदत्ताविषयतया परं रजसः प्रादुर्भावात् तृतीये वर्षे वरगुणाननादृत्या प्यदत्ताविषयतया च सकोचितानि । नेदं संगच्छते, आचारविरुद्धत्वात्, आचारानुगुणस्य व्यवस्थान्तरस्यैव सम्यक्त्वाच्च, नाचर्यते हि लोके विप्रकन्यकानामृत्वनन्तरं विवाहः, सम्भवति च समीचीनं व्यवस्थान्तरं, यथा ऋतुमत्या-

विवाहनिषेधपराण्यङ्गिरःप्रभृतिमुनिवचनानि ब्राह्मणजातिविषयाणि, ऋ
नन्तरमपि त्रिचतुरवर्षपर्यन्तं विवाहाभ्यनुज्ञापराणिमन्वादि वचना
तु ब्राह्मणभिन्नाद्विजातिविषयाणि, तथाहि—

ऋतुमतीं प्रकृत्य (अङ्गिराः)

उद्वहेदृतुमतीं कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्योह्य पाङ्क्तेय स्सविप्रो वृषलीपतिः ॥

(यम बोधायन पराशराः)

यस्ता विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ॥

उत्तरार्धं अङ्गिरोवचनवदेव ॥

(यम पराशरौ)

यः करोत्येकरात्रेण वृषळीसेवनं द्विजः ।
सभैक्षभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥
वृषळीयस्तुगृह्णाति ब्राह्मणो मदमोहितः ।
सदा सूतकितातस्य ब्रह्महत्या दिने दिने ॥

इत्येवमादिकेषु वचनेषु सर्वत्र ब्राह्मणपद मुपात्तं दृश्यते, नैवं मनु-बोधयनयोः त्रिवर्षाऽभ्यनुज्ञावचनगतं जातिविशेषोपादान मुपलभ्यते, अतस्सामान्य विशेष न्यायानुसरणात् कन्यकानामृत्वनन्तरमपि विवाहाऽभ्यनुज्ञानं ब्राह्मणभिन्नद्विजातिविषयतयैव संकोचनीयमिति युक्तं. एवं हि शास्त्राचारयोः अन्योन्यानुग्रह स्समञ्जस इति.

अत्रप्रत्युच्यते, यद्येवं सर्वाण्यृतुमतीविवाहप्रतिषेधशास्त्राणि ब्राह्मणमात्रविषयाण्येव भवन्तीत्येष्टव्यानि. तर्हि क्षत्रियादीनां प्रतिषेध एव

नस्यादृतुमतीविवाहे, अनेवंविधवचनान्तरानुपलम्भात्, अभ्यनुज्ञानार्थकं मन्वादिशास्त्रं तु अनालम्बमेवस्यात् प्रतिषिद्धे हि वस्तुनि अभ्यनुज्ञा स्वारसिकी, अथचेदेवमुच्यते,

गौतमः (सू) "प्रदानं प्रागृतोः"

बोधायनः " दद्यात् गुणवतेकन्यां नग्निकां ब्रह्मचारिणे
अपिवा गुणहीनाय नोपरुन्ध्याद्रजस्वलां ॥

इत्यादिशास्त्रैर्नग्निकादानविधिबलाक्षेपासिद्धं प्रतिषेधमवलम्ब्य मन्वाद्यभ्यनुज्ञाशास्त्रं प्रवर्तते. तच्च ब्राह्मणेषु माभूदित्यपोद्यते यमादिवचनैरिति, तदपिनयुक्तम्. गृह्यस्मृतिविरोधस्य दुष्परिहरत्वात्. गृह्येषु हि वैवाहिक चतुर्थापररात्रे समावेशनाद्यपरपर्याय मुपगमनं नियत मुपदिश्यते बोधायनादिभिर्मुनिभिः, तत्खलुवचनमनर्थकमेवस्यात् ऋतुमती विवाहस्याऽत्यन्तप्रतिषेधे. न चेदमपि ब्राह्मणेतरविषयमेवोपगमनविधान मिति युक्तं तस्य बोधायनगृह्ये स्पष्टमेव ब्राह्मणविषयत्वावगमात्— तत्र हि.

(सू) " ब्राह्मणेन ब्राह्मण्या मुत्पन्नः प्रागुपनयनात्
जात इत्यभिधीयते " इत्युपक्रम्य

तस्यैव उपनयनेनाध्ययनविशेषेण च व्रतानुचारि, ब्राह्मण, श्रोत्रिय, अनूचान, ऋषिकल्प, भ्रूण, ऋषि, देव, संज्ञाः विधाय तादृशपुत्रकामोद्देशेन वैवाहिकं व्रतमाश्रित्य विशेषा उपदिश्यन्ते. (सू) " अथयदिकामयेत श्रोत्रियं जनयेयमित्यारुन्धत्युपस्थानात् कृत्वा त्रिरात्र मक्षारलवणाशिनावधश्शायिनौ ब्रह्मचारिणावासाते.

अहतानां वाससां परिधानं सायं प्रातश्चालंकरण इक्षुप्रतोद-

योश्चधारणं उभौ कालावग्निपरिचर्या च व्रतान्ते पक्वहोम उपसंवेश नञ्च ” इत्यादिभिरनूचानादिपुत्रकामानां द्वादशरात्रादि वत्सरान्तकालिका व्रत भेदा उपदिश्यन्ते, सर्वेऽपि व्रतभेदा उपसंवेशनान्ता एव विहिताः, तच्च उपसंवेशन, व्यवायाचरणमेवेति निरूपितं विमर्श एव, यदिपुनः उपसंवेशनन्नाम सहशयनमात्रमिति वा, कालान्तरं विहित मृतुगमनमनूद्यत इति वा केचिदाविष्कुर्वन्ति संरंभं, तेभ्यः प्रणामाञ्जलिसमर्पणमेव वर मुत्तरं मन्यामहे । नचेमेकाम्या व्रतविकल्पाः नित्याद्वैवाहिकनियमात् भिन्ना इति युक्तं, वैवाहिक एव प्रकरणे प्रथमोपदिष्ट मरुन्धत्युपस्थानमनूद्यविशेषमात्रोपदेशात्, वैवाहिक धर्मशेषाणां परस्तादेवोपदेशाच्च, न्याय्यं चैतत्, नित्यं व्रतमाश्रित्य पुत्रफलक धर्मविशेषविधानं दर्शपूर्णमासांग मपांप्रणयन माश्रित्य पशुफलक गोदोहविधानवत्, किंच काम्यानि कर्माणि यथावदनुष्ठित कृत्स्नांगोपकृत प्रधानमन्तरा न फलायकल्पन्ते, इत्ययमर्थो धर्ममीमांसायां षष्ठाध्याय तृतीयचरण द्वितीयाधिकरणेन सिद्धान्तितः, (सू) “सर्वाशक्तौ प्रवृत्तिः स्यात्तथा भूतोपदेशात्”इत्यादिना. अतश्चेदं बोधायनस्य व्रतविधानमन्यथाऽनुपपद्यमानं ब्राह्मणानामपि ऋतुमती विवाहं निश्शङ्कमेव प्रसाधयति, अपिच—स्मृत्युक्त धर्माणां स्मृत्यन्तरापेक्षया यथोचितं सङ्कोचविकल्पौ दृश्येते शास्त्रेषु, नैवं क्वचित् गार्ह्यधर्माणां स्मृत्यपेक्षया गृह्यान्तरापेक्षयावा बाधसङ्कोचविकल्पाः क्रियमाणा दृश्यन्ते, अपिच, स्मृतयो न व्यवतिष्ठन्ते, अमुनापुरुषेणासावेवस्मृतिरनुवर्तनीयेति, गृह्यसूत्राणि तु व्यवस्थितानि,

" शिखां पुण्ड्रं च सूत्रं च समयाचारमेव च ।
पूर्वैराचरितंकुर्यात् अन्यथापतितो भवेत् "

इति वैद्यनाथदीक्षितोदाहृतादापस्तम्बवचनात्. सूत्रान्तरविहितो-विशेषस्तु उपादेयएव सर्वेषां स्वसूत्राऽविरोधे. ( यदाह वैद्यनाथीये ) ( शातातपः )

" सर्वश्रुत्युपसंहारात् श्रौतेपूक्तोयथाविधिः ।
सर्वस्मृत्युपसंहारात् स्मार्तेपूक्तस्तथाविधिः " ॥

इति, अत्रार्थे बोधयनमतस्वीकारस्य विशिष्य प्राशस्त्यमपि-स्मर्यते

( वैद्यनाथदीक्षितीये, अङ्गिराः )

" स्वसूत्रेऽविद्यमाने तु परसूत्रेण वर्तते ।
बोधायनमतंकृत्वा स्वसूत्रफलभाक्भवेत् " ॥

इति, अत एव खलु आपस्तम्बादिभिरनुपदिष्टा अपि, उदकशान्ति, आयुष्यहोम, कर्णवेधन, उपवीतधारणादयः बोधायनोक्ताः सर्वैः आद्रियन्ते शिष्टैः । एतेन बोधायनगृह्यविहितं काम्यव्रतं बोधायनिनामेव, नाऽन्येषामित्याक्षेपोऽपि प्रयुक्तोवेदितव्यः। सर्वेषु गृह्येषु आश्रयभूतस्य उपगमनान्तस्य विवाहाङ्गव्रतस्योपदिष्टत्वात्. विशिष्टपुत्रकामनावता बोधायनोपदिष्टविशेषस्वीकारस्य अविरोधात् ॥ तस्मा न्निरवकाशबोधायनादि गृह्यस्मृतिबलात् मन्वाद्यभ्यनुज्ञात त्रिवर्षाद्यनन्तर-कालेऽपि सावकाशानां यमादिवचनानामेव सङ्कोचो न्याय्यः, तस्मात् विमर्शोक्तैव व्यवस्था सुसङ्गता ।

(2) ननु सङ्गच्छतां कामं विमर्शकृताव्यवस्था । तथापि न सिध्यत्येव रजोदर्शनानन्तरं विवाहः कन्यकानां, पराशरस्मृतिविरोधस्य परिहर्तुं अशक्यत्वात् , तत्र हि स्मृतौ. कन्यकानां विवाहात् प्राग्रजोदर्शने पितृमातृभ्रातृणां नरकपातः स्मर्यते. मोहात्तादृशकन्यावोढुः असंभाष्यतादिदोषकथनपूर्वकं प्रायश्चित्तं च विधीयते, ऋत्वनन्तरं वर्षत्रयादिरूपं कालान्तरं तु नैवोपदिश्यते, तथा च, तद्वचनानि—

प. अ. (7) (4) "अष्टवर्षाभवेद्गौरी नववर्षातुरोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला" ॥

(5) "प्राप्ते तु द्वादशेवर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिबन्ति पितरः स्वयं" ॥

(6) "माताचैव पिताचैव ज्येष्ठोभ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वाकन्यां रजस्वलां" ॥

(7) "यस्तां विवाहयेत्कन्यां ब्राह्मणोमदमोहितः ।
असंभाष्योऽह्यपाङ्क्तेयः सविप्रोवृषलीपतिः" ॥

(8) "यःकरोत्येकरात्रेण वृषलीसेवनं द्विजः ।
स भैक्षभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति" ॥ इति—

स्मृतिश्चेयं पाराशरी, कलियुगीयवर्णाश्रमादिधर्मोपदेशायैव प्रवृत्ता, परमं खलु प्रमाणमिदानीं कलौ,

प.अ.1.श्लो (24) "कृते तु मानवाधर्माः त्रेतायां गौतमाः स्मृताः ।
द्वापरे शंखलिखिताः कलौ पाराशराः स्मृताः॥"

इति तत्रैवोक्तत्वात् .

ततश्च कथमेतत् स्मृत्यनभिमन मृत्वनन्तरविवाहं मन्वाद्यभ्यनुज्ञामात्रादाद्रियामहे । तस्माद्विमर्शोक्तो गौणकल्पनाप्यृतुमती विवाहो न सिध्यत्येव ॥

बाढं, विमर्शे प्रत्युक्तोऽपि पुनरुच्चलत्येव पराशरस्मृतिविरोधः अतः अत्रापि प्रत्युच्यते । किं भोः "कलौपाराशराः स्मृताः" इत्यनेन कलौ स्मृत्यन्तराणां अनुपादेयत्वमभिप्रेयते, अथ वा स्मृत्यन्तरवचनैः, पराशरवाक्यानां संकोचोमाभूदिति, आहोस्वित्, प्राशस्त्यमात्रमस्याः, नाद्यः सर्वथास्मृत्यन्तराणा मनुपादेयत्वे पराशरस्मृतावग्रहणादेव यागस्थक्षत्रियवध कौटसाक्ष्यादीनां स्मृत्यन्तरोदितानां पातकत्वमेव नस्यात्, दूरे खलु प्रायश्चित्तकथा, किंच, बहुस्मृतिगृह्यपुराण पर्यालोचनप्रयासपूर्वकं महतो निबन्धान्विरचितवतां विज्ञानेश्वराचार्य हेमाद्रिप्रभृतीनां न केवलं प्रयासवैयर्थ्यं, शास्त्रहृदयाऽनभिज्ञतापि खल्वापतेत्, नद्वितीयः, पराशरविहितानां धर्माणां स्मृत्यन्तरवचनैः सर्वथा संकोचाऽनङ्गीकारे, कलियुगधर्मप्रवर्तक पराशरमुन्युपादिष्टानां पुनर्विवाहादीनां पुराणादिवचनालम्बनेन संकोचकरणमुन्मत्तप्रलपितमेवस्यात् तथाहि—

प.अ.4. श्लो.३०. "नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्योविधीयते ॥

**इत्यनेन वचनेन स्त्रीणां पत्यदर्शनादिषु निमित्तेषु पुनर्विवाहः स्मर्यते. अयंचपुनरुद्वाहः,**

" ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधंतथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुं " ॥

इत्यनेन ( आदित्यपुराणवचनेन ) युगान्तरविषयतया संकोचितो व्याख्यात्रा. तथा ; (ब्रह्महत्याप्रायश्चित्तविधानप्रकरणे )

प. अ. 12-69. " दशयोजन विस्तीर्णं शतयोजनमायतं ।
रामचन्द्रसमादिष्ट नळसञ्चयसञ्चितं ॥

70. सेतुंदृष्टासमुद्रस्य ब्रह्महत्यां व्यापोहति ।
सेतुंदृष्ट्वा विशुद्धात्मा त्ववगाहेत सागरम् ॥
यजेतवाश्वमेधेन राजातु पृथिवीपतिः " ॥

इति, पापक्ष्यापन भिक्षाटनादिनियमोपेतसेतुयात्रायामशक्तस्य भूपते रश्वमेधानुष्टानमेत्र प्रायश्चित्तमुपदिश्यते पराशरेण.

" नराश्वमेधौ मद्यंच कलौवर्ज्यं द्विजातिभिः " ।

इत्यनेन (ब्रह्मपुराणवचनेन.) कलावश्वमेधनिषेधः प्रतिपाद्यते निबन्धृभिः । अपिच, सेतुदर्शनरूपं प्रायश्चित्तमपि कलौ महापातकस्य नास्तीत्यभिप्रेयत इव निबन्धृभिः ।

" संसर्गदोषः स्तेनाद्यैर्महापातकनिष्कृतिः ' ।

इति, कलिवर्ज्येषु धर्मज्ञसमयवचनोदाहरणात् , एवमन्यदपि द्रष्टव्यं. अतश्च, परिशेषात् ,

" कलौ पाराशरास्मृताः " इत्यनेन, कलियुगे, पराशरस्मृत्युदिताः धर्माः प्रशस्ता इत्येव एष्टव्यं भवति ।

इममर्थं श्रीमान् माधवाचार्योऽपि उपोद्घतावसाने विस्पष्टमेवाह,

" यद्यस्मिन् विषये प्रोक्तं तत्तस्य प्रशस्तता ।
विवक्षितानेतरस्य निषेधोऽत्रविवक्ष्यते " ॥ इति

एवं च पराशराभिहितः कन्यकानामृतोः प्रागेवविवाहः प्रशस्त इति सिध्यति. स च न कयाचिदपि स्मृत्या विप्रतिपद्यते. मन्वाद्यभिमतो गौणकालस्तु नानयास्मृत्या प्रतिषिध्यते । किच, अत्रस्मृतौ शुद्धिं प्रकृत्य कन्यायाः शुद्ध्यशुद्धी प्रतिपादयितुं पठितानीमानिवचनानि, स्मृत्यन्तरसंवादं विना न सम्यक्स्वार्थप्रकाशनेप्यलमभवंति. अत्रहि—प्रथमेवचने,

" दशवर्षाभवेत् कन्या अत ऊर्ध्वं रजस्वला " ।

इत्यनेन, दशमेवयसि अविवाहितायाः कन्यायाः एकादशवयःप्राप्तौ काचिदशुद्धिर्भवति, साच, रजस्वलात्वरूपा, इति प्रतीयते, किमिदं रजस्वलात्वं तदानीं रजः प्रादुर्भावेमाति भवति, आहोस्वित्, वयः प्राप्तिमेव मूलीकृत्य परिभाष्यते, इति न विस्पष्टं. अत्रकेचित्, एकादशेवयसि रजः प्रादुर्भावाभावेऽपि अन्तः पुष्पमुत्पद्यत इति वदन्ति. किमिदमन्तःपुष्पं बहिःपुष्पं अन्तराळपुष्पमित्यपूर्वं उच्यत इति नाहमनुयोक्तव्यः भवादृशेभ्य एव सुहृद्भ्यः श्रूयमाणत्वात्, तानेवान्विष्य पृच्छतु भवान् मूलप्रमाणमस्य. अस्त्विदं. अनन्तरेऽपि,

" प्राप्ते तु द्वादशेवर्षे " इत्यस्मिन् वचने, द्वादशे वयसिकन्या-यामप्रत्तायां यः प्रदाने अधिकृतः पित्रादिः तत्पित्रादीनां, रजःपान-रूप नरकप्राप्तिः उच्यते, तदपिकि वयःप्राप्तिमात्राभिप्रायेण, उत, तदानीं प्राप्तरजोऽभिप्रायेण. ननु, स्पष्टमेम प्रतीयते " मासि मासि रजस्तस्याः " इति उत्तरार्धेन दृष्टरजःकन्यकाविषयतेतिचेत् भवतु तदापि, किं एकादशेवयसि प्राप्तरजसः कन्यकायाः द्वादशेवयसि अप्रदाने वा, तदानीं रजःप्राप्त्यनन्तरमेवाप्रदाने वा रजःप्राप्तेः प्रागेवाऽप्रदानेवेति नैव विस्पष्टं प्रतीयते, यद्यप्यनन्तरे

"मातांचैवेति" वचने कन्यायाविवाहात् प्राक् रजोदर्शने, मात्रादीना नरकप्राप्तिवर्णनात् तदनुसारेण प्राक्तनयोरपि वचनयोः कथञ्चिदर्थ-सम्पादनं संभवति, तथापि नायमर्थः सुप्रतिष्ठितः स्यात् . यतः एकादशेवयसि रजस्वलावदशुद्धिमाप्नोति कन्या, द्वादशे वयस्यप्रदानं पितॄणां नरकहेतुः, साक्षाद्रजोदर्शनं मात्रादीनां नरकहेतुरित्यर्थोऽपि संभवति एतदर्थाभ्युपगमेच कन्याया एकादशवयःप्रभृत्येवाऽविवाह्यता स्यात् " यस्तांविवाहयेत्कन्यां " इतिवचनगततच्छब्देन सन्निहित-श्लोकत्रयोक्ताऽशुद्धिमत्याः कन्यायाः परामर्शस्यैव युक्तत्वात् अत एव खलु व्याख्यातृाऽपि " प्रदानं प्रागृतोः " इति गौतमवचनं " तस्मादुद्वाहयेत् कन्यां यावन्नर्तुमतीभवेत् " । इति यमवचनञ्चोदाहृत्य सर्वत्रसंभवद्रजोदर्शनाभिप्रायपरतयैव व्याख्यातमेतत्प्रकरणगतं वचनजातं. तस्मात् पराशरस्मृतिः नसर्वथा स्मृत्यन्तरानिरपेक्षा-

भवंति. अयमर्थः पराशर मुनिनैव ज्ञाप्यते, "शेषं मुनिविभाषितं" [प] [11] [34] इत्यनेन.

प्रकरणश्चेदं शुध्यशुद्धिकथनायप्रवृत्तं, न विवाहकालविधानायेति प्रपञ्चितं विमर्श एव तस्मान्नानयास्मृत्या मनुबोधायनकृत-मभ्यनुज्ञाशास्त्रं बाध्येत. नचेदेवं कथं बहुस्मृतिपर्यालोचनपुरस्सरं याज्ञयल्क्यस्मृति व्याचक्षाणो विज्ञानेश्वराचार्यः

[याज्ञ 1. 64 "अप्रयच्छन् समाप्नोति भ्रूणहत्या मृतावृतौ"। इत्यत्र, "एतच्चोक्त लक्षणवरसंभवे द्रष्टव्यं" इति भ्रूणहत्या प्राप्ति सदृशवरसंभवेऽप्यदातृविषये संकोचयेत् स किंविमस्मार पराशरस्मृति किंवा सोऽभूद्युगान्तरे अतोऽत्रविमर्शकृताव्यवस्था न पराशरस्मृतिबाध्येत्युपपद्यते,

(3) ननु, भवत्वेव मन्वाद्यभ्यनुज्ञाशास्त्रस्य पराशरस्मृत्यापि बाधाऽभावः, तथापि तन्नानुष्ठानाय प्रमाणीकर्तुमर्हं, समाचाराऽभाव प्रतिहतत्वात्, सूतिका क्षौरशास्त्रवत् ,स्मर्यते हि सूतिकायाः क्षौर। [वैद्यनाथीये, अखण्डादर्शवचनं]

"दम्पतीशिशुनासार्द्धं सूतकेदशमेऽहनि ।
क्षौरं कुर्युस्ततः पूताः स्नानदानादिकर्मसु ॥" इति ।

अत्र [वैद्यनाथदीक्षितस्य व्याख्या

"अत्रलोके समाचाराऽभावात् न मातुर्वपनं, नापिशिशोः" किंतु पितुरेववपनं कैमुतिकन्यायेन प्रतिपादितं ॥" इति ।

आचारोऽपि खलु परमं प्रमाणमिति समर्थ्यतेमन्वादिभिः,

म. अ. २. ६ "वेदोऽखिलो धर्ममूलं, स्मृतिशीले च तद्विदां"

"आचारश्चैवसाधूनां आत्मनस्तुष्टिरेव च"

[याज्ञवल्क्यश्च] १. ७.

"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतं ॥"

[आपस्तम्बश्च] "धर्मज्ञसमयः प्रमाणं" इत्यादिभिः, बह्वी-ष्वपि स्मृतिष्वा चारस्याऽपि प्रामाण्यं प्रदर्शितं, अतश्चैतादृशाचाराऽभाव प्रतिहतत्वात् "त्रीणिवर्षाणि" इत्यादि शास्त्रस्य,

कथं तदवलम्बेन ऋत्वनन्तरमपि कचिद्विवाह्यन्तां कन्यकाः इत्यभ्यनुजानीयुः शिष्टाः पण्डिताः, तस्मात् ऋत्वनन्तरमपि गौणकल्पे-नास्ति विवाहः कन्यकानां इत्ययं विमर्शोक्तः तवाऽभिप्रायो न सिद्ध्यत्येव ।

सत्यमेवं, अथाप्यत्र किञ्चिदुच्यते, किमङ्गप्रमाणं प्रमाणान्तरेण बाध्येत, उत, प्रमाणान्तरप्रतियोगिकाऽभावेनाऽपि, प्रमाणान्तरेणापि किं प्रबलेन प्रमाणेन प्रमाणान्तरस्यबाधः । आहोस्वित् , तुल्यन्यून बलाभ्यामपि, यत्किञ्चित् प्रमाणं प्रबलेन प्रमाणान्तरेण बाध्यत इत्येव युक्तं । इह खलु भवान् स्मृते राचाराऽभावेन बाधं अभिप्रैति, आचा-रस्य हि समर्थ्यते प्रामाण्यं.

" आचारश्चैव साधूनां " इत्यादिभिः, नैवं तदभावस्याऽपि, किंच, यद्याचाराऽभावेन स्मृतेः बाधोऽभिप्रेयते तर्हि स्मृत्यभावेन आचारस्यापि बाधोदुर्वारः स्यात् ततश्च जैमिनीयानां आचारस्य पृथक् प्रामाण्यव्यवस्थापनं तदवलम्बेन होळाकादीनां धर्मत्व व्यवस्थापनञ्च कथं सङ्गच्छेत, अतो नाचाराऽभावेन स्मृति बाधकथनं उपपन्नं। अथोच्येत, रजोदर्शनात् प्रागेव कन्यका विवाह्यन्ते इत्ययं शिष्टजनानां आचार एव मन्वाद्यभ्यनुज्ञास्मृतेः शिष्टजनोपेक्षितत्वरूप मप्रामाण्यं ज्ञापयति, स एवात्राचाराऽभावः इत्युपचर्यते इति, सत्यं, सदाचारः परमं प्रमाणं उपदिश्यते स्मृत्यादिषु ॥

" आचारः प्रथमोधर्म श्रुत्युक्तस्मार्त एवच ।

तस्मादस्मिन्सदायुक्तो नित्यं स्यादात्मवान् द्विजः" ॥ इत्यादिभिरनेकत्र.

तथापि नास्य स्मृत्यपेक्षया प्राबल्यमङ्गीक्रियते स्मर्तृभिरभियुक्तैर्वा यद्बलात् अयं क्वचित् स्मृतिमपि बाधितुमीष्टे, सर्वत्रह्यस्य स्मृतितो दौर्बल्यमेव प्रामाण्ये विवक्ष्यते, तथाहि--भवदुदाहृते "वेदोऽखिल" इत्यस्मिन् मनुवचने वेद, स्मृति, वेदविच्छील, तदाचारात्मतुष्टीनां पाठक्रममेव प्रामाण्य प्राबल्य प्रयोजकं मन्यन्ते व्याख्यातारः। इममेवक्रमं याज्ञवल्क्योऽप्याह

"श्रुतिः स्मृतिः सदाचारः स्वस्यचप्रियमात्मनः ।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतं ॥"

माधवीयेऽपि आनुशासनिकवचनं ।

''धर्मजिज्ञासमानानां प्रमाण प्रथमं श्रुतिः ।

धर्मशास्त्रं द्वितीयन्तु तृतीयं लोकसंग्रहः ॥''

[गौतमोऽपि] (सू)

" वेदोधर्ममूलं, तद्विदां च स्मृतिशीले इति."

[वसिष्ठश्च]

''श्रुतिस्मृति विहितो धर्मः तदलाभे

शिष्टाचारः प्रमाण'' इति.

मनुना भेदेनाभिहितयोः शीलाचारयोः क्वचित् अन्योन्यस्मिन् अन्तर्भावो बोध्यः, किंच

''स्मृतिशीले च तद्विदां " तद्विदांच स्मृतिशीले "

इत्युक्त्या स्मृ त्याचारयोरपि श्रुतिमूलकत्वेनैव प्रामाण्यमुक्तं द्रष्टव्य । अत्रामीषां प्रमाणानां अन्योन्यविरोधे व्यवस्थापि विद्यत एव शास्त्रेषु । तत्र तुल्यबलयोः श्रुत्योः स्मृत्योर्वा विरोधे विकल्पमाह [गौतमः] (सू)

" तुल्यबलविरोधे विकल्पः" इति विकल्पोप्ययं यथा स्वकुलाचारं व्यवस्थित इत्युच्यते ।

[यथाह वैद्यनाथदीक्षितीये, सुमन्तुः]

''यत्रशास्त्रगतिर्भिन्ना सर्वकर्मसु भारत ।

उदितेऽनुदिते चैव होमभेदो यथा भवेत् ॥

तस्मिन् कुलक्रमायातमाचारञ्चा चरेत् द्विजः ।

सगरीयान् महाबाहो सर्वशास्त्रोदितादपि ॥ इति.

एवमाचारविरोधेऽपि द्रष्टव्यं । श्रुतिस्मृत्योः परस्परविरोधेतु, स्मृतिर्बाध्यते.

[यदाहवैद्यनाथीये, लौगाक्षिः]

"श्रुतिस्मृतिविरोधेतु श्रुतिरेव गरीयसी ।
अविरोधो यदाकार्यं स्मार्तं वैदिकवत्तदा ॥"

तत्रैव संग्रहवाक्यं ।

"श्रुतिस्मृतिपुराणेषु विरुद्धेषु परस्परं ।
पूर्वं पूर्वं बलीयः स्यात् इति न्यायविदोविदुः ॥" इति ।

अयमर्थो भट्टपादैरप्युच्यते । (सू)"हेतुदर्शनाच्च" इत्यत्र "यावदेकं श्रुतौ कर्म स्मृतौवाऽन्यत्प्रतीयते तावत्तयो विरुद्धत्वे श्रौतानुष्ठानमिष्यते" इति एवं स्मृत्याचारयोर्विरोधेऽपि [ वैद्यनाथीये चतुर्विंशति मत वचनं ]

"स्मृतेर्वेदविरोधेन परित्यागो यथा भवेत् :
तथैव लौकिकं वाक्यं स्मृतिबाधात्परित्यजेत् ' ॥

लौकिकं वाक्यमिति आचार उपलक्ष्यते निर्णीतश्चायमर्थः [शिष्टाकोपाधिकरणसिद्धान्तवार्तिके]

" शिष्टं यावच्छ्रुतिस्मृत्योः तेनयन्नविरुद्ध्यते ।
तच्छिष्टाचरणं धर्मे प्रमाणत्वेन गम्यते ॥
" यदि शिष्टस्य कोपस्याद्विरुद्ध्येत प्रमाणता ।
तदकोपात्तु नाचारप्रमाणत्वं विरुद्ध्यते ॥ " इति

अतश्चैवं विचार्यमाणस्सर्वथाप्याचारो न स्वापेक्षया प्रबलप्रमाणभू स्मृतिं बाधते इत्येतत् युज्यते. यदत्र स्मृते राचारबाध्यत्वे सू काक्षीरवचनोदाहरणं तदपि न विरुद्धं, तद्धिवचनं,

प.अ.९.५५."नास्त्रियाः केशवपनं न दूरे शयनाऽऽसनं," इ

पराशरस्मृति वचनेन विप्रतिषिद्धं विप्रतिषेधेच आचारा रोधेन व्यवस्था साधीयसीति वचनमिदं कैमुत्येन पुंमात्रक्ष विधिपरं व्याचख्यौ वैद्यनाथदीक्षित इति मन्तव्यं नैवमभ्यनु वाक्यानां संकोचः क्रियमाणो दृश्यते निबन्धनेषु, गृह्याख्यस्मृत्यन्त नुग्रहश्च भूयानत्र, तस्मान्नोक्तदोषावकाशो विमर्शे. किंच, येनामकेि ऋत्वनन्तरकालिकं विवाहं आपत्कल्पं मन्यन्ते ते विमर्श एव प्रत्युक्त नायमापत्कल्पोभवितुमर्हति इति. येत्वनुकल्पत्वादयं न सर्वानुष्ठानम तीति, ते पण्डिताः मयैवं स्मार्यन्ते, मुख्यकाले कन्यां विवाहयितु शक्तानामेवायं गौणकालः, न शक्तानां, तद्विषयाण्येव कार्त्स्न्येन प्रि

षेधशास्त्राणीति प्रतिपदमुच्यत एव मयेति,

[4] ननु, एवमपि, न कन्यकानामृत्वनन्तरकालिकोविवाहस्सम् ञ्जसः, लोकविद्विष्टत्वात् . लोकविद्विष्टस्यानुष्ठानप्रतिषेधोहिस्मर्यते याज्ञवल्क्येन

(1) (156) " कर्मणामनसावाचा यत्नाद्धर्मं समाचरेत् ।
अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्नतु " ॥ इति किं योनामविद्वद्भिः निर्विचिकित्समभ्यनुज्ञायते सखल धर्म इत्युच्यते.

(यदाहमनुः)

" विद्वद्भिः सेवितः सद्भिः नित्यमद्वेषरागिभिः ।

हृदयेनाभ्यनुज्ञातः यस्तं धर्मं निबोधत " इति,

(आपस्तम्बश्च) (सू. " यत्वार्याः क्रियमाणं प्रशंसन्ति स धर्मः, यद्गर्हन्ते सोऽधर्मः " इति

(वैद्यानाथीये विश्वामित्रश्च आह)

" यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः ।

सधर्मोयं विगर्हन्ते तमधर्मं प्रचक्षते ॥" इति ।

भवदुक्तश्चायं गौणकालिको विवाहः न सद्भिरभ्यनुज्ञायते, कथमयं धर्म इत्युपदिश्यते भवता ।

उच्यते, यदत्र प्रथमो हेतुरुच्यते लोकविद्विष्ट इति तन्नसिद्ध्यति यतोलोके बह्वयः कन्यकाः द्वादशाद्वयसः परमेव विवाह्यमाना दृश्यन्ते । रजोदर्शनात् प्रागेव विवाह्यन्ते, नानन्तरमिति तु नोत्तरं वयोऽतिपत्तौ तन्निर्णयस्यैव दुःशकत्वात् , प्रत्युत, बहवइदानीं स्पृहयन्ते पण्डिता अप्यास्तिकतमा अपि दैवात्पु नरुद्वाह प्रसङ्गे द्वादशाधिकवयसामेव कन्यकाना विवाहाय, न तथा बालिकानां विवाहाय प्राथमिकेऽपि विवाहे युवानोऽपि, सन्त्येव कुत्रचिदास्तिकतमाः, येनामस्वदुहितरमर्वागेव दशमाद्वत्सरात् गुणवतेवराय प्रयच्छन्ति, नैतावता लोकविद्विष्टत्वं गौणकालिकविवाहस्य, अतोत्र प्रथमोहेतुरसिद्ध एव । यच्चापि हेत्वन्तरं विद्वांसस्साधवोनाभ्यनुजा-

नन्तीति, तदपि न सम्यक् श्रुतिस्मृत्यगोचरेषु देशादि धर्मेषु तन्त्रोपदिष्टेषु वा, आर्याऽऽचारतदभ्यनुज्ञा प्रतीक्षणं न्याय्यं । तदर्थैवेयं

" विद्वद्भिः सेवितः सद्भिः" इत्यादिस्मृतिः, स्मृतिगोचरेष्वपि शिष्टाचार तदनुज्ञा प्रतीक्षणमिति चेत् कृतं स्मृतिप्रणयनायासेन मुनीनां । किंच, यदिशास्त्र प्रमितेष्वपि धर्मेषु शिष्टसंमतिः प्रतीक्ष्यते तदा किं सर्वेषामपि शिष्टानां सम्मतिः, उत कतिपयानां, सर्वशिष्टसम्मत्यपेक्षायांतु शास्त्रीयेष्वग्निष्टोमादिष्वपि सेदानीं दुर्लभैव भवेत् , कतिपयानामिति तु, संभवत्येवा त्रापि शिष्टसम्मतिरित्युदास्तां तावत् भवान् । वस्तुतस्तु, शास्त्रप्रमितेष्वपि हि धर्मेषु शास्त्रप्रमितत्वनिर्णयो न महतां शास्त्रहृदयज्ञानां विदुषां विमर्श पूर्विकामनुमतिं विना संभवति अतस्तदुररीकृत्यैव इदानीं लोकतन्त्रनिष्णाताः परिषन्मेलनेन महतामाराधनाय प्रयतन्ते. यदिनामते सम्यगनुमन्येरन् घटतां लोकस्यशोभनमिति।

---

Printed at the Brahmavadin Press, Madras

AN

# EXPOSITION

OF

THE TEACHING OF

# THE HINDU SASTRAS

IN REGARD TO

# The Marriageable Age of Dvija Girls.

PREPARED AT THE INSTANCE OF

THE SOUTH INDIAN

HINDU MARRIAGE REFORM LEAGUE

BY

PANDIT T. V. SRINIVASA SASTRIGAL

PROFESSOR OF DHARMA SASTRA

*Mylapore Sanskrit College*

 [ **Price 12 annas.**

Madras:

PRINTED AT THE ANANDA PRESS

1912.

श्रीरस्तु



द्विजकन्यानाम्

# विवाहकालविमर्शः

अयं ग्रन्थः

चेन्नपुर्युपान्तवर्ति मयूरपुरवास्तव्यानां कपालिन्महाशयानां नल्लमुत्तसय्य

मद्रास् संस्कृतकालेज् स्मृतिप्रधानाध्यापकेन

ति. वे. श्रीनिवासशास्त्रिणा

विरचितः

चेन्नपुर्याम्

आनन्दमुद्राशालायां मुद्रितो

विजयताम्

1912

# विवाहकालविमर्शस्य शुद्धाशुद्धपत्रिका.

| पृष्टम्. | पङ्क्तिः. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| 2 | 15 | उपतिष्ठमानोाप | उपतिष्ठमानोऽपि |
| 1 | 8 | भारमे | आरभे |
| 2 | 11 | ग्रागेव | प्रागेव |
| ,, | 23 | प्राकठ्यं | प्राकट्यं |
| 3 | 3 | बिरुदाङ्कितैः | बिरुदाङ्कितैः |
| 5 | 17 | वसिष्ठादिभिः | वसिष्ठादिभिः |
| 6 | 2-3 | एकार्यत्वोपपत्ते | एकार्थत्वोपपत्तेः |
| 8 | 3-4 | ानबन्धाराऽभिप्रेताः | निबन्धारोऽभिप्रेताः |
| ,, | 6 | निबन्धनां | निबन्धानां |
| 9 | 16 | गर्भाष्टमः | गर्भाष्टमः |
| ,, | 17 | इत्यष्टमवर्षस्य | इत्यष्टमवर्षस्य |
| ,, | 19 | ऊर्ध्वे | ऊर्ध्वं |
| 10 | 12 | वसिष्ठः | वसिष्ठः |
| 11 | 1 | ' संवर्तः अष्टमे | संवर्तः ''अष्टमे |
| ,, | 14 | गर्भोष्टम | गर्भाष्टम |
| 12 | 1 | भवेत्कन्या | भवेत्कन्या |
| ,, | 13 | किञ्चित्कालं | कंचित्कालं |
| ,, | 20 | ऊर्ध्वे | ऊर्ध्वं |
| 13 | 3 | षोडशब्दां | षोडशाब्दां |
| ,, | 8 | अष्टवर्षा | अष्टवर्षां |
| 16 | 14 | ऊर्ध्वे | ऊर्ध्वं |
| ,, | 21 | अर्धेन्दयप्रियं | अर्धेन्द्यप्रियं |
| 21 | 24 | कुलूकभट्ट | कुल्लूकभट्ट |
| 22 | 3-4 | उक्तस्यादिति | उक्तं स्यादिति |
| 23 | 17 | प्रतायते | प्रतीयते |
| 24 | 9 | षटशतेभ्यः | षट्शतेभ्यः |
| ,, | 23 | सत्य | सप्त |
| 25 | 7 | याज्ञुपैः | याजुषैः |
| ,, | 10 | स्मत्याः | स्मृत्योः |
| 27 | 11 | [illegible] | ब्राह्मणां |

| पुटम्. | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 27 | 18 | दत्तामामपि | दत्तामपि |
| ,, | 24 | अययमर्थो | अयमर्थो |
| 28 | 10 | एवं | एव |
| ,, | 11 | दोष | दोषं |
| 31 | 15 | वृनत्वोक्तेः | व्रनत्वोक्तेः |
| 35 | 10 | लक्षणयवै | लक्षणयैव |
| ,, | 18 | अष्टमे | अष्टमे |
| 39 | 25 | ब्रह्मचर्ये | ब्रह्मचर्यं |
| 40 | 13 | शब्दा | शब्दो |
| 41 | 5 | तदव | तदेव |
| 42 | 8 | अमरसिंहः | अमरसिंहः |
| ,, | 24 | त्रिरात्रब्रह्मचर्य | त्रिरात्रब्रह्मचर्यं |
| 43 | 15 | दर्वारं | दुर्वारं |
| 46 | 1 | तस्युः | तस्युः |
| 47 | 6 | तदव्ययसिद्धं | तद्व्ययसिद्धं |
| 48 | 7 | ऐकण्ठ्येन | ऐककण्ठ्येन |
| ,, | 14 | समावेशन | समावेशनं |
| 49 | 8 | बाधायनेन. | बाधायनेन |
| 50 | 5 | सुदर्शनाचार्यणे | सुदर्शनाचार्येण |
| ,, | 13 | अरत्निमात्राणि | अरत्निमात्राणि |
| ,, | 15 | नमल् | तेमल् |
| 51 | 9 | एवं | एव |
| , | 17 | प्रदर्शन | प्रदर्शन |
| 52 | 1 | अभिप्रैति | अभिप्रैति |
| 54 | 19 | सपादन | सम्पादन |
| ,, | 20 | समावशन | समावेशन |
| 57 | 13 | एकान्गि | एकाग्नि |
| 60 | 18 | हेमाद्रयुदितेपु | हेमाद्र्युदितेषु |
| 64 | 5 | पुप्यते | पुष्यते |
| ,, | 16 17 | तर्ह्य अस्तु | तर्ह्यस्तु |

॥ ॐ ॥

अस्ति किल मयूरपुरे संस्कृतमहापाठशाला सुगृहीतनामधेयैः भारतभारतीसुकृतभागधेयैः लोकोपकारनिरतैः यशःकायेनाद्यभुवनमण्डलीमलंकुर्वाणै महाभागैः वी. कृष्णस्वाम्यार्यमहाशयैः प्रतिष्ठापिता। तस्यां पाठशालायां धर्मशास्त्राध्यापकपदमधितिष्ठद्भिः ब्रह्मश्री. श्रीनिवासशास्त्रिभिः पण्डितवर्यैः विरचितोऽयं विवाहकालविमर्शाख्यो ग्रन्थः मम परिशीलनपथमुपानायि। अनुवाच्य चैनं ग्रन्थमभ्यर्थ्यते मयानुमतिः स्वाशयाविष्करणाय।

को नाम न वेत्ति पण्डितगोष्ठीसारज्ञः पण्डितः — यदुत चिराय पण्डिताः प्रायशः तेषु तेषु शास्त्रीयनव्यप्रस्थानेष्वनारतं परिश्राम्यन्तः स्वीयं मतिवैभव वादाहवेषु केवलं विनियुञ्जते ; तत्तच्छास्त्रेषु प्राचीनग्रन्थविमर्शनम्, विशिष्य पूर्वतन्त्रस्य धर्मशास्त्रस्य च सविमर्शं परिशीलनम् आराद्धुत्सृजन्ति ; अद्यत्वे च धर्मस्य पादमात्रेणावशिष्यमाणतां सार्थकयन्तीव धर्मशास्त्र परिशीलनमाशौचकाण्डमात्रविश्रान्तं कुर्वन्त इति। एवंजातीयदुरवस्थायां धर्मशास्त्रस्य, भारतीयजनताया योगक्षेमनिर्वाहः सर्वथा धर्मशास्त्रार्थस्य, विहाय धर्ममात्रादन्यतोऽभिनिवेशम्, विवेचने निर्णये चायतते—इति सुदृढमभिसंधाय, लोकहितैषिभिर्महाशयै रास्तिकैः प्रभुभिः पण्डितैरन्यैश्च आद्यात्विकभारतीय दुःख दुर्दिन पर्जन्यभूत मुख्यावचं वैवाहिकं प्रकारं, अनतिलङ्घ्यशास्त्रम् अपरिभूयच दृष्टं परिष्कर्तुं यतमानैः सोत्कण्ठं जिज्ञास्यमानमपि विप्रतिपत्ति शताकुलतया सम्यक्प्रत्ययपथ दूरीकृतं वैवाहिकं कालं विशिष्य विषयतया आलम्ब्य, सर्वा अपि मूलस्मृतीः निबन्धनानिच अतन्द्रमनवरतं परिशील्य, विवाहकाल-

विमर्शपर मेनं प्रबन्धं विधाय, महामहोपाध्याय ब्रह्मश्री गणपतिशास्त्रिभिः वयो निर्णयाख्ये प्रबन्धे सोल्लुण्ठं साग्रहं साधिक्षेपंच उद्भावितानाक्षेपान् वैवाहिकवयोनिर्णयानुबन्धिनीनां स्मृतीनां योजनप्रकारांश्च सम्यक्परिशोध्य, वयोनिर्णये उपलभ्यमानान् युक्त्याभासांश्च अस्पृष्टग्राम्यतापथम् असंसृष्टदृष्टमूलम् अनुत्सृष्टादृष्टभयम् आविष्कृत्य, शास्त्रतात्पर्यगोचरं विवाहकालं च निर्णीय, महान्तं लोकोपकारम् आहितवद्भ्यः शास्त्रिवर्येभ्यः सबहुमानं धन्यवादसहस्रवितरणेन आत्मानं कृतार्थयितुं प्रयते। प्रबन्धेऽस्मिन् शास्त्रिवर्यैः प्रायशः सर्वाण्यपि विवाहकालानुबन्धीनि प्रमाणानिसम्यक् समालोचितानि; तेषां च तरतमभावः सचमत्कारं परीक्षितः; सन्दर्भरीतौ उपन्यासगमनिकायां च अत्युदारः कल्पः समादृत इति—एतादृशान् बहून् गुणान् उपलभमानाः सर्वेऽपि, विश्वासिमि, न निह्नोतुं प्रभवेयुरात्मीयां प्रवृत्तिं स्वारसिकीम्—'धर्मशास्त्रमर्मज्ञान् बहून् पण्डितान् अतिशेरत एते' इति शास्त्रिवर्याभिनन्दने। तथापि विषयेऽत्र विवाहकालानुबन्धिनि विचारपदवीमारोढुं पुरत उपतिष्ठमानोऽपि वैदिकलिङ्गानां स्मार्तश्रुतीनांच बलाबलसंबन्धी विषयः शास्त्रिवर्यैः प्रबन्धेऽत्र सप्रपञ्चं विचाराय, कुतोऽपि वा हेतोः, न समादृत इत्येतत् शास्त्रतत्त्वविमर्शनकुतुकिनां चेतांसि किञ्चिदिव विमुखी कुर्यात्। अथवैतत्साम्प्रतं मन्ये—यदयं पृथक् प्रबन्धे प्रपञ्चनार्ह इत्यभिसन्दधानैः शास्त्रिवर्यैः विशिष्य विषयमेन मालम्ब्य ग्रन्थान्तरस्य अवतारणाय अवकाशोऽवशेषितः स्यात् इति॥

S. CUPPUSAWMY SASTRI,

*PRINCIPAL*,

**Sanskrit College, Tiruvadi.**

॥ ॐ ॥

इहखलु "बोद्धारोमत्सरग्रस्ताः प्रभवः स्मयदूषिताः । अबोधोपहताश्चान्ये" इति नैजानुभवाभिलापि कविवरोक्तरीत्या, प्रायशो बहुषु शास्त्रतत्वमजानत्सु, जानत्स्वपि मात्सर्यदुराग्रहादिग्रहग्रस्तेषु कन्यायाः परिणययोग्यं, वयः परिमाणं, तत्वतोजिज्ञासमानैः कैश्चनात्रत्यैः महाशयैः प्रभुभिः प्रेरितै रिहत्य कलाशालायां स्मृतिप्रस्थानाध्यापकैः सुगृहीतनामभिः ब्रह्मश्री श्रीनिवासशास्त्रिभिः विरचितोऽयं ग्रन्थः परमामोदं जनयति ॥ अस्मिन् ग्रन्थे वैवाहिकमन्त्रव्याख्यान कल्पसूत्र, मूलस्मृति, निबन्धनग्रन्थ, रूपाणि सर्वाण्यपि प्रमाणान्याधापोह्वापाभ्या मपक्षपाततोविचारितानि,नेतरग्रन्थवत् अत्र कुत्राप्यप्रामाणिकसरणिरादृता,अतोऽयं ग्रन्थः तत्वबुभुत्सुभिः दूरीकृतदुरभिनिवेशै रसूययाऽस्पृष्टैः शिष्टैराद्रियेतनतरामिति दृढं विश्वसिमि॥

इत्थं मैलापुरस्थापित कलाशालाया अध्यक्षः,

रा. चन्द्रशेखरशास्त्री,

महामहोपाध्यायः.

॥ ॐ ॥

॥ श्रीगणाधिपतये नमः ॥

# विवाहकालविमर्शः

पायात्सदा भगवती हिमशैलजाता
सा कापि कल्पलतिका विबुधैकवेद्या ।
गृह्णन् करे कुसुमितामपि यां कपाली
दत्ते फलान्यविरतं द्विजराजमौलिः ॥ १ ॥

नत्वा गुरून् मुनीन् पूर्वान् स्मर्तॄन् गृह्यकृतस्तथा ।
कन्याविवाहकालस्य विमर्शं कश्चिदारभे ॥ २ ॥

## उपोद्घातः.

इह खलु विदितमेवैतत्सर्वेषां यद्भारतवर्षीयाणां कन्यकाः प्रायशः क्वापि देशे जातौ वा विवाहं विना न स्थाप्यन्त इति.

तत्रापि वैदिकं पन्थानमनुरुन्धाना द्विजातयस्सुतरां न क्षमन्ते कालातिक्रमं कन्याविवाहे । अस्मत्प्राक्कालिकास्तु प्रायेणाऽर्वागेव दशमात्संवत्सरात् विवाहं कन्यकानां निर्वर्तयामासुरिति आयात्येव कर्णपथम् ॥ इदानीं खलु प्रायो नाऽर्वाग्द्वादशाद्वत्सरात् कन्यकानां विवाहः क्रियमाणो दृश्यते । ततःपरञ्च त्रयोदशाद्यापञ्चदशवत्सरं बह्वयः कन्यका विवाह्यमाना दृश्यन्ते ॥ तत्र च नाऽविदितोऽयं हेतुस्सर्वेषाम्, यदाङ्गलविद्यायां किञ्चिदधीतिनोऽपि प्रथमं बहुशतप-

रिमितां वरदक्षिणां निश्चित्य, ततःपरं कन्यां स्वयमवेक्षन्ते । यद्यन्योन्यं मनोनयनानुरागः तर्ह्येव विवाहस्सिद्ध्यति भूयसा धनव्ययेनेति ॥ इममेव पन्थानमनुरुन्धते वेदाधीतिनोऽपि । किं बहुना, सर्वेऽपि ॥ सतिचैवं विवाहविलम्बहेतौ कथं कन्यका रजो न पश्येयुः । किं वा कुर्युः पित्रादयो बान्धवाः । परन्तु न पश्यन्त्येव यावद्विवाहं रजः कन्यकाः । पश्यन्ति तु कतिपयैरेव दिवसैर्मासैर्वा विवाहात्परम् । हन्त किल पूयेमह्येव रजसा कन्यकानां साक्षात्, परम्परया वा । धन्यान्यस्माकं हव्यानि कव्यानिच । कृतार्था हि पितरः ॥ अलमतिवादेन.

एवमास्तिकजनानामपि कन्यार्तवगोपने हेतुः ब्राह्मणजातावृतोः प्रागेव विवाहकरणमिति रूढमूलोऽयमाचार एव । यद्येवमेव पुंसामपि कश्चित्कालनियमः स्यात् विवाहविधौ नैवं विधः क्लेशस्स्यात्कन्यापितृणाम् ॥ सत्त्व जाग्रत्यपि कलौ दीर्घकालब्रह्मचर्यनिषेधशास्त्रे, सत्स्वपि दृष्टदोषेषु, नपुंसां परिदृश्यते विवाहकालनिर्बन्धः । तत एव खलु दीनाढ्यविभागं विनैव "कन्यापितृत्वं दुःखाय" इत्ययमाभाणको विप्रजननामात्रं विषयीकरोति ॥ यद्यप्ययमनिवारणीय एवाऽऽचारः साधूनां, तथापि यदि कन्यकानां ऋत्वनन्तरमपि कञ्चित्कालं विवाहकालमभ्यनुजानाति शास्त्रम, तर्हि किञ्चिदपि विश्रान्तिस्स्यादेव कन्यापितृणामिति बहवोऽधुनातनाः प्रेक्षावन्तो मन्यन्ते ॥

सतिचैवमेतादृशाना परार्थैकपराणां प्रोत्साहनात् कतिपयेभ्य प्राग्वर्षेभ्यः व्र. श्र. श्रीनिवासशास्त्रि महाशयैः श्रुतिस्मृतिपर्यालोचनेन कश्चिद्ग्रन्थः प्राकठ्यं नीतः "ऋतुमतीविवाहः" इत्याङ्गलभाषायाम् । ऋतुमतीनामेव विवाहश्शास्त्रीय इति तदभिप्रायः । तञ्च सर्वजनीनतायै द्राविड्यां भाषायां विपरिणमय्य प. नारायणार्य-

नामा कश्चिन्महाशयः प्राचीकटत्। गच्छति च तस्मिंस्तत्रतत्र चक्षुर्गोचरताम् इदानीमुपलभ्यते 'वयोनिर्णयाख्यः' कश्चित् वेदान्तकेसरि महामहोपाध्याय बिरुदाङ्कितैः प. गणपतिशास्त्रिवर्यैः गीर्वाणवाण्या निर्मितः पूर्वनिर्दिष्टग्रन्थस्य खण्डनरूपो ग्रन्थः। अस्य च ऋतोः प्रागेव कन्यकानां विवाहश्शास्त्रीयः, न परस्तात् इत्ययमर्थः प्रतिपाद्यः॥ सविवेचमनयोः ग्रन्थयोः कतरः साधीयानिति तत्त्वं बुभुत्सन्ते केचन महाशयाः। तदनुरोधादेवाऽस्य मारम्भो विमर्शस्य॥

॥ इत्युपोद्घातः॥

---

परिच्छेदः I.

# स्मृत्येकवाक्यता.

---

ऋतुमती विवाहग्रन्थाभिप्रायः

अत्र पूर्वग्रन्थकृतः ' विवाहक्रियाविनियुक्ता मन्त्राः अर्थतो विमृ- ' श्यमानाः प्राप्तयौवनानामेव कन्यकानां विवाहं- ' ज्ञापयन्ति । गृह्यसूत्राण्यपि विमृश्यमानानि त- ' मेवार्थं पोषयन्ति।स्मृतयस्तु काश्चन संवदन्त्यमु 'मर्थं पुरातन्यः।काश्चन विसंवदन्तेऽर्वाचीनाः।तत्र ' च स्मर्तृषु सर्वप्राचीनो मनुः। स च कन्यकानां द्वादशे वयसि तदन- ' न्तरं वा विवाहस्य मुख्यं कालमभिप्रैति । कदाचित् वरानुरोधात् ' अष्टमवर्षमपि अभ्यनुजानाति । अन्येतु स्मृतिकारा यावद्यावत्कन्य- 'कानां विवाहकालं सङ्कोचयन्ति, कालातिक्रमे दोषञ्च गुरूकुर्वन्ति, 'तावत्तावदर्वाचीना एव भवेयुरित्यनुमाय मन्त्रगृह्यार्थानुसारित्वात् ' मन्वभिप्रेत एव कन्याविवाहकालः समुचितः.' इति सविस्तरं प्रतिपाद्य निरधारयन्.

वयोनिर्णयस्य प्रासङ्गिकविषयाः

वयोनिर्णयकारास्तु अयमर्थः सर्वथा न घटत इति सविस्तरं निरूपयन्ति । (1) तत्रप्रथमं महता ग्रन्थसन्दर्भेण स्त्रीरक्षणं प्रतिपादयन्ति । तच्चाऽविप्रतिपन्नमेव सर्वेषाम् । (2) स्त्रीणां नित्योविवाह इति चाभ्यु- पगन्तव्यमेव सर्वैः । स खलु मौञ्जीबन्धनस्थानीयः स्त्रीणां, यदकरणे द्विजातित्वमेव न सिद्ध्येत् ॥ (3)यत्तु पुंसां विवाहः काम्य इति तच्चिन्त्यम् ; यतः,

" गार्हस्थ्यमिच्छन् व्रतिकः कुर्याद्दारपरिग्रहम् ।
ब्रह्मचर्येण वा कालं नयेत्सङ्कल्पपूर्वकम् ॥
वैखानसो वा पि भवेत् परिव्राडथवेच्छया । "

इत्युदाहृतवचनेन विकल्पमात्रं प्रतीयते ।

" अनाश्रमी न तिष्ठेत क्षणमेकमपि द्विजः ।
आश्रमेणविना तिष्ठन् प्रायश्चित्तीयते तु सः ॥ "

इति दक्षेणाऽनाश्रमवासे प्रत्यवायश्च स्मर्यते । ततो विमृश्यमानो ब्रह्मचर्याद्यन्यतमाश्रमपरिग्रहः वैकल्पिकनित्य एव स्यात् व्रीहियववत् ॥ भवतु नाम काम्यो नित्योवा गृहस्थाश्रम. । सर्वथाप्ययमप्रकृतः ॥

(1) अतः परं स्मृतीनां पौर्वापर्यव्यवस्थां निराकार्षुः वयोनिर्णयकाराः, यथा,

" श्वमांसमिच्छन्नार्तोऽत्तुं धर्माधर्मविचक्षणः ।
प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान् " ॥

इत्यादिभिरनेकत्र धर्माधर्मव्याख्यातृमुन्यन्तरानुवादस्य मनुनैव क्रियमाणत्वात् पौर्वापर्यकल्पनं दुःशकमिति ॥

(2) युक्तश्चैतत् यतो यमबोधायनवसिष्ठादिभिः स्वस्वस्मृतिषु मनोरिव मनुनाप्यन्य स्मृत्यनुवादः क्रियते यथा,

" वसिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्धनीम् ।
अशीतिभागं गृह्णीयात् मासाद्वार्धुषिक इशते" (VIII-140)

" शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च ।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥ " (III—26)

इत्यादिषु ॥

(5) यत्तु स्मृतीनामेकवेदमूलकत्वात् एकवाक्यतासम्पादनेनैवानुष्ठेयार्थनिर्णयः कार्य इत्याह—यथा "एकमूलत्वात् स्मृतीनामेकार्थत्वोपपत्तेः, एकमेव हि नित्यसिद्धं वेदं तपोविशेषादीश्वरानुग्रहाच्च मूलमुपलब्धवन्तो महर्षयस्तदनुभावितमर्थमस्मार्षु स्तत्रतत्र स्मृतिषु" (21 पृ) इति.

इदं तु चिन्त्यम्, यतो भगवान् व्यास एव श्रुत्यादीनामैकमत्यं दुस्सम्पादमभिप्रैति ।

"तर्कोऽप्रतिष्ठः श्रुतयोविभिन्ना नैको मुनिर्यस्य मतं प्रमाणम् ।
धर्मस्यतत्त्वं निहितं गुहायां महाजनो येन गतस्सपन्थाः ॥"
(महाभारतं, वनपर्व, अ. 3 1 श्लो-11.) इत्यत्र.

किञ्च पराशरस्मृतिव्याख्योपोद्घाते माधवाचार्योऽप्येकवाक्यता सम्पादनमशक्यमनावश्यकञ्च मन्यते ।

"स्मृत्यन्तरानुसारेण विषयस्य व्यवस्थितिः।
कल्पनीयेति चेद्ब्रूहि सर्वज्ञम्मन्य साधकम् ॥

यावत्यः स्मृतयस्तासां सर्वासामनुसारतः ।
साकल्याद्वेदस्मदादेस्तत्र शक्तिर्नविद्यते ॥

स्वेन दृष्टास्तु यावत्यस्तासा मित्यप्ययुक्तिमत् ।
क्वचित्कदाचिदन्यासां दर्शनादव्यवस्थितः ॥

अल्पिका मानुषी बुद्धिः सा च न व्यवतिष्ठते ।
अत एव निबन्धेषु दृश्यते नैकवाक्यता ॥" इत्यादिभिः

परस्ताच्च—

" अत एव निबन्धेषु " इत्यस्य व्याख्यारूपेणाह—
" देशभेदात्कालभेदात् पुंभेदादन्यथान्यथा ।
पर्यवस्यतिशास्त्रार्थ इति पूर्वमवादिषम् " इति ।

अथवा सम्पाद्यतामेकवाक्यता । इयं खलु शैली निबन्धॄणाम्, यदेकवाक्यतासम्पादनेनैवाऽनुष्ठेयार्थव्यवस्थाकरणमिति ॥ निबन्धैकशरणाहि वयम्। मिताक्षरामाधवीयादिनिबन्धानामुल्लङ्घने निरालम्बा हि भवेम । अत एवाऽत्राऽपि ग्रन्थे तदनुरोधेनैव विमर्शारम्भः क्रियते

यच्च सुकन्याख्यानाद्यवलम्बेन स्त्रीणामैच्छिको विवाह इति पूर्वग्रन्थकृदाशयमुल्लिख्य महता संरम्भेन खण्डनं तदपि न्याय्यम् । यतो देवानां ऋषीणाञ्च चरितं साकल्येनाऽस्माकमनुष्ठानाय न भवति । यदाह— बोधायनः ॥

" अनुष्ठितन्तु यद्देवै र्मुनिभिर्यदनुष्ठितम् ।
नानुष्ठेय मनुष्यैस्तदुक्तं कर्म समाचरेत् " ॥ इति । आपस्तम्बश्च ॥

" दृष्टो धर्मव्यतिक्रमस्साहसञ्च पूर्वेषाम् ।
तदन्वीक्ष्यप्रयुञ्जानस्सीदत्यवरः ॥ इति

स्मतिचोदितमवश्यकर्तव्ये स्त्रीणां विवाहे तत्कालनिर्णयाय प्रवृत्तयोः ग्रन्थयोः द्वादशात्परमेव मुख्यं वयो विवाहस्येति वदन्तं पूर्वग्रन्थं खण्डयन्नुत्तरग्रन्थ एवं वदति। तद्यथा " नित्ये च सति विवाहे स्त्रीणां कतर'स्मिन् वयसि स मुख्यः, कदाचायमशास्त्रीय' इतीदमिदानीं विचारणीयम् । तत्र ऋतोः परमेव 'वयो ब्राह्मणस्त्रीणां विवाहकर्मण्यङ्गभूतो मुख्यः कालः; नातः प्राची' नमिति श्रुत्यादि सिद्धोऽर्थ इत्यधुनातना मेधाविनः । गर्भाष्टममेव

वयो निर्णय-कारांभिमतो विवाहकालः ॥

'वयो मुख्यः कालः,ततः परन्तु विवाहकरणमशास्त्रीयमेव सर्वथेति,
'सांप्रदायिका मन्यन्ते''। इत्यमुमेवार्थं स्मृत्याद्युदाहरणेन साधयन्ति.

किमत्रत्येन सांप्रदायिकशब्देन विज्ञानेश्वरमाधवादयो निब-
न्धारोऽभिप्रेताः, आहोस्विदाधुनिकाः धर्मशास्त्र-
प्रवक्तारः। आधुनिकाश्चेत् , तेऽपि किल प्रायशो
निबन्धनामेवार्थान् विविच्य वदन्तो दृश्यन्ते। स-
चाऽभिप्रायो निबन्धानामिह प्रकटयिष्यते तत्र

प्रकृतग्रन्थकृद-
भिप्रायः ॥

तत्र। वयो निर्णयाख्य ग्रन्थे तु खण्डयग्रन्थानुरोधेन मूलस्मृति-
वचनसङ्कलनेनैव व्यवस्थाकृता ॥ तेषामेव स्मृतिवचनानां एकवाक्य-
तयार्थपर्यालोचनात्, अन्यनिबन्धपरामर्शाच्च अस्माकमन्यथैवार्थः
प्रतीयते। तद्यथा ''यावद्रजोदर्शनं कन्यकानां प्रदानस्य मुख्यः
'कालः, ततःपरं यावद्वर्षत्रयं गौणः कालः, तदनन्तरं पित्रादीनां
'दानाधिकारो व्यपैति। कन्यातु गुणवन्तं तदभावे गुणहीनं वा
'सवर्णं सा पिण्डयादिदोषरहितश्च भर्तारं स्वयमेव वृणुयात्'' इति.

अत्र कन्यकानां विवाहस्योपनयनस्थानीयत्वं स-
र्वसंप्रतिपन्नम्, कालश्चानयोस्तुल्य इति। यथाह
–व्याघ्रपादः ॥

स्त्रीणामुपनय-
नस्थाने विवाहः ॥

'' उपायनोदितःकालः स्त्रीणामुद्वाहकर्मणि।
स्त्रीणामुपनय स्थाने विवाहं मनुरब्रवीत्॥'' इति

उपनयनस्य हि यावद्द्वादशवर्षं मुख्य एव कालोऽभिप्रेयते, स्म-
र्तृभिर्निबन्धृभिश्च। यदाह अपस्तम्बः ' वसन्ते ब्राह्मणमुपनयीत।
'ग्रीष्मे राजन्यं, शरदि वैश्यम्। गर्भाष्टमेषु ब्राह्मणं गर्भैकादशेषु राज-
'न्यं गर्भद्वादशेषु वैश्यम्'' (ख. I. सू. 19) ''अथ काम्यानि, सप्तमे
'ब्रह्मवर्चसकामं, अष्टम आयुष्कामं, नवमे तेजस्कामं, दशमेऽन्नाद्य-

'कामं, एकादश इन्द्रियकामं, द्वादशे पशुकामं" (ख. 1. सू. 21-26)
'इति। अत्र उज्वला "एतानिषट् सूत्राणि स्पष्टार्थानि, सर्वत्रोपन-
'यीतेत्यपेक्ष्यते। अचार्याधीनः स्यादित्यादीनि यानि ब्रह्मचारिव्रतानि
'वक्ष्यन्ते, तेष्वसमर्थानां कुमाराणां वर्णक्रमेणाऽनुकल्पानाह—" आ-
'षोडशात् ब्राह्मणस्याऽनात्यय., आद्वाविंशात् क्षत्रियस्य, आचतुर्विं-
'शाद्वैश्यस्य" ॥ यथा व्रतेषुसमर्थ स्स्यात् यानिवक्ष्यामः" ।(आप. धर्म-
'ख 1-27) इति - तथा निर्णयसिन्धुकारोऽपि, "अथोपनयनमि"त्यु-
पक्रम्य क्रमेणाष्टमादि द्वादशवयः पर्यन्तान् कालान्निरूप्य "गौणका-
'लमाह --मनुः आषोडशात् ब्राह्मणस्य सावित्रीनातिवर्तते। आद्वा-
'विंशात्क्षत्रबन्धो रा चतुर्विंशतेर्विशः" इति द्वादशादेव वयसोनन्तर
मुपनयनस्य गौणकालमभिप्रैति ॥

विवाहस्यमुख्यः कालः।

एवं कन्याविवाहस्याऽपि कालविशेषबोधकानि स्मृतिवचनानि तत्र तत्र निबन्धेषु प्रकृतोत्तरग्रन्थे चोपलभ्यन्ते। यथा माधवीये यमः

"विवाहं चोपनयनं स्त्रीणामाह पितामहः।
तस्माद्गर्भाष्टमः श्रेष्ठः जन्मतोवाऽष्टवत्सरः॥"

इत्यष्टमवर्षस्य विधिः। तथा तत्रैव संवर्तः।

"अष्टवर्षाभवेद्गौरी नववर्षातुरोहिणी।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला॥" इति। तत्रैव यमः

"अष्टवर्षाभवेद्गौरी नवमेनग्निका भवेत्।
दशमेकन्यका प्रोक्ता द्वादशे वृषलीस्मृता॥" इति

तत्रैव गौर्यादिलक्षणकथनपूर्वकं तासां दानफलविशेष उक्तो मरीचि वचनेन।

"गौरी न्ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत्।
कन्यां ददद्ब्रह्मलोकं रौरवन्तु रजस्वलाम्॥" इति,

तथावैद्यनाथदीक्षितीये मनुः

"त्रिंशद्वर्षोवहेत्कन्यां हृद्यांद्वादशवार्षिकीम्
(व्या) एतद्रजो दर्शनाभावे वेदितव्यम्" इति।

तथा निर्णयसिन्धौ महाभारत वचनं,

"त्रिंशद्वर्षष्षोडशाब्दां भार्यां विन्देत नग्निकाम्
द्वयष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः॥" इति

अत्र षोडशवर्षाया नग्निकात्वविशेषणेन रजो दर्शनाभावे षोडशवार्षिककन्याया विवाहोऽपि प्रशस्त एवेत्यर्थो लभ्यते॥ तथा वयो विशेषाऽनुपादानेनाऽनृतुमती विवाहं प्रतिपादयन्ति कानि चिद्वचनानि, यथाऽत्रैव खण्डनग्रन्थे वसिष्ठः

"प्रयच्छेन्नग्निकां कन्यां ऋतुकालभयात पिता।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति॥" इति। तत्रैव संवर्तः

"तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत" इति। बोधायनोऽपि।

"दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम्"॥ इति। माधवीये संवर्तः।

"रोमकालेतु सम्प्राप्ते सोमो भुङ्क्ते तु कन्यकाम्।
रजो दृष्ट्वा तु गन्धर्वो वह्निस्तु कुचदर्शने॥
तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत्" इति।

गौतमधर्मेप्युक्तम्। "प्रदानं प्रागृतोः।" इति,

**अमीषां वचनानां पर्य्यालोचने यावद्रजो दर्शनं कन्यकानां विवाहस्य मुख्यकालतैवप्रतीयते । अष्टमस्य तु अतिप्रशस्तता । इत्थ-मेवाभिप्रेत्य वैद्यनाथदीक्षितो वर्णाश्रमकाण्डे निरचैषीत्— यथा तत्र**

" संवर्तः अष्टमे तु भवेद्गौरी नवमे नग्निका भवेत् ।
'दशमे कन्यका प्रोक्ता द्वादशे वृषली भवेत् ॥" आपस्तम्बः ।

" दशवर्षा भवेत्कन्या अत ऊर्द्ध्वं रजस्वला ।

'प्राप्ते तु द्वादशे वर्षे रजस्त्रीणां प्रवर्तते" । एतच्च प्रायिकाभि-'प्रायम । न पुनर्द्वादश एव रजस्वला भवतीति । कासांचिदर्वागपि 'रजोदर्शन सम्भवात् । अत एव यमसंवर्तौ । " दशवर्षा भवेत्कन्या 'अत ऊर्द्ध्वं रजस्वला" । इति, एवञ्च यावद्रजो दर्शनं न सम्भवति, 'तावत्कन्यात्वमुक्त भवति । अत एव यम. । ' तस्मादुद्वाहयेत्कन्यां 'यावन्नर्तुमती भवेत् " ॥ इति

युक्तञ्चैतत् । यतो देशकुल शरीरपुष्ट्यादिनिमित्तवशेन भि-न्नकालिकमेव रजोदर्शनं कन्यकानां लोकेऽनुभूयते । ततश्च गर्भाष्टम-प्रभृति यावद्रजो दर्शनं कन्यकानां मुख्यो विवाहकालो भवतीति स्थितम् ॥

क्वचिद्गुणवद्वराऽपेक्षया गर्भाष्टमात्प्रागपि कुमारीणां विवाहो ऽभ्यनुज्ञायते । यथा माधवीयेमनुः ।

विवाहस्य गौणः कालः। बालिशा विवाहः ।

"उत्कृष्टायाभिरूपाय वराय सदृशाय च ।
अप्राप्तामपितान्तस्मै कन्यां दद्याद्यथावि-धि ॥ ",९.८ इति ॥

**(व्या) अप्राप्तामपि अप्राप्त विवाहसमयां बालिकामपीत्यर्थः" । वैद्यनाथदीक्षितीयेऽपि यमः ।**

"बालिशा या भवेत्कन्या गुणाढ्यो यदि लभ्यते ।
दद्यादप्राप्तकालेऽपि देशकाल भयान्नरः ॥ " इति,

अस्मिन्नेव बालिका विवाहे किंचित् विशेषोऽभिहितो माधवीये—"प्राशस्त्यमाह मरीचिः ।

'जन्मतो गर्भाधानाद्वा पञ्चमाब्दात्परं शुभम् ।
'कुमारी वरणं दानं मेखलाबन्धनं तथा॥इति। आनुशासनिकेच
'जातमात्रातु दातव्या कन्यका सदृशे वरे ।
'काले दत्तासु कन्यासु पिता धर्मेण युज्यते ॥ " इति

यथाच गुणवद्वराऽपेक्षया बालिकाया अपि विवाहोऽभ्यनुज्ञायते, एवं गुणवद्वराऽलाभेऽपि तल्लिप्सया कन्यकानामृतोः परमपि वर्षत्रयं दानकालोऽभ्यनुज्ञायते । ततो वर्षं यावत् कन्यानां स्वयंवरकालः । यथा माधवीये—"दृष्टेतु रजसि,सत्स्वपि पित्रादिषु किञ्चित् कालं प्रतीक्ष्य तदुपेक्षणेन स्वयमेव वरं वरयेत् । तदाह बोधायनः ।

ऋत्वनन्तरं विवाहः·

'त्रीणिवर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
'ततश्चतुर्थे वर्षेतु विन्देतसदृशं पतिम् ।

'अविद्यमाने सदृशे गुणहीनमपि श्रयेत् ॥ इति (बो IV-I-II)
मनुरपि,

'त्रीणिवर्षाण्युदीक्षेत कुमार्यृतुमतीसती ।
'ऊर्ध्वन्तुकालादेतस्माद्विन्देत सदृशंपतिम् इति मनु-IX-90)"

अत्र कन्यकानामष्टमवर्षात्प्राक् द्वादशवर्षात्परस्ताच्च विवाहस्य णकालता वर्णनं श्रीमन्माधवाचार्य वैद्यनाथदीक्षितयो स्तुल्यमेव श्यते तन्निबन्धयोः ॥

**निर्णयसिन्धुकारस्तु** कुमारीणां यावद्दशवर्षं मुख्यं दानकालं ततो यावत्षोडशवर्षं गौणश्चाभिप्रैति। यथा "महाभारते

'त्रिंशद्वर्षः षोडशाब्दां भार्यां विन्देतनग्निकाम्।

'ह्यष्टवर्षोऽष्टवर्षां वा धर्मेसीदति सत्वरः।

'अतोऽप्रवृत्ते रजसिकन्यां दद्यात् पितासकृत्।

'तत्रैव। सप्तसंवत्सरादूर्द्धं विवाहः सार्ववर्णिकः।

'कन्यायाः शस्यते राजन्नन्यथा धर्मगर्हितः।" इति (मनुः) त्रिंशद्व-र्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्। ह्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः। यद्यपि 'विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बु-धैः' इति संवर्तोक्तेः 'अत ऊर्द्ध रजस्वला' इत्यादेश्च दशवर्षादूर्द्ध वि-वाहो निषिद्धः, तथापि दातुरभावे द्वादशषोडशाब्दे ज्ञेयं। "त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम्।" इति पराशरामाधवीये-बोधायनोक्तश्चेति"॥

वैद्यनाथदीक्षितस्य तु यावदृतुदर्शनं मुख्यः कालः तदनन्तरं गौण इति प्रागुक्तम्। एवमेवाभिप्रायो माधवाऽपरार्कादीनामपि। अन्यथा निबन्धृणां 'त्रीणिवर्षाण्यृतुमती" इत्यादि वचनोदाहरणं अ-नर्थकमेव स्यात्॥

विषयव्यवस्था

सति चैवं यानि वयोनिर्णयकारोदाहृतानि विवाहात् प्राक् रजः पश्यन्त्याः कन्यायाः तत्पित्रादीनां तद्दातुश्च दोष प्रतिपादनपराणि, यथा "अङ्गिराः, पितृवेश्मनि या कन्या रजस्तु समुपस्पृशेत्" इत्यादीनि वचनानि, तानि सर्वाण्यपि पूर्वोक्त व्यवस्थाया अविरो-धेनैवाऽर्थवत्तां प्राप्नुवन्ति। तद्यथा

अत्र यद्दातुर्दोषकीर्तनं "ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितर-मृच्छति" इत्यादिषु तत्सम्भवत्यपि गुणवति वरे यः काले कन्यां न प्रयच्छति तद्विषयम् ॥ यो वा गुणवद्वराऽलाभे ऋतोः परस्तात् तृतीये वर्षे विशिष्टगुणरहितायाऽपि न प्रयच्छति तद्विषयश्च ॥ यदाह बोधायनः --

'त्रीणि वर्षाण्यृतुमतीं यः कन्यां न प्रयच्छति ।

स तुल्यं भ्रूणहत्यायै दोषमृच्छत्य संशयम् ।" (IV-13)

"न याचते चेदेवं स्याद्याचते चेत्पृथक् पृथक् ।

एकैकस्मिन् ऋतौ दोषं पातकं मनुरब्रवीत् ॥" (IV-14)

वसिष्ठश्च --

"यावच्च कन्या मृतवः स्पृशन्ति तुल्यैः सकामामभियाच्यमानाम्।
भ्रूणानि तावन्ति हतानि ताभ्या माता पितृभ्यामिति धर्मवादः।"

(अ-17-61) इति ॥

अनयोः वचनयोः यदा पित्रादिर्दृष्टरजसं कन्यां सदृशे वरे याचमानेऽपि न प्रयच्छति तदा प्रभृति प्रत्यृतु स्वयंवरकालः॥ भ्रूणहत्या प्राप्तिरुच्यते । अयाचमाने तु सदृशे वरे यदा तृतीयमपि वर्षमतीयात्तदा एका भ्रूणहत्या इति च ॥ चतुर्थतु वर्षे न दानाधिकारः पित्रादेः । तत्र स्वत्वाभावात् - यदाह मनुः स्वयंवरं प्रकृत्य

"पित्रे न दद्याच्छुल्कन्तु कन्या मृतुमतीं हरन् ।

सहि स्वाम्यादतिक्रामेत् ऋतूनां प्रतिरोधनात्" ॥ (IX-93) इति, अतस्तृतीयवर्षे गुणवद्वराऽलाभे भ्रूणहत्या भयान्निर्गुणायाऽपि दद्यादेव कन्यकां, "अपिवा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ।" इति बोधायन स्मरणात् ।

नन्विदं नग्निकाविवाहपरम्? "दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे। अपिवागुणहीनाय" इति गुणवद्ब्रह्मचारिसंप्रदानक-नग्निकादानस्यैव गुणवद्वराऽलाभे संप्रदानान्तरं गौणमुपदिश्यते॥बाढमेवं, अस्मिन् हि वचने गौणसंप्रदानकदानस्य कारणमुच्यते। "नोपरुन्ध्या द्रजस्वलां" इति. स च रजस्वलोपरोधः सामान्यतो दोषइति ज्ञायमानस्सन् विशेषमाकांक्षते।तत्पूरणश्चाऽनन्तरेण वचनेन क्रियते। "त्रीणिवर्षाण्यृतुमतीं यः कन्यां न प्रयच्छति। स तुल्यं भ्रूणहत्यायै-दोषमृच्छत्यसंशयम्॥" इत्यनेन स दोषो भ्रूणहत्यारूपः। स च रजोदर्शनानन्तरं त्रिवर्षात्यये भवतीति॥एवमेवाभिप्रेत्य "दद्याद्गुणवते-कन्यां" इत्यादिकं प्रकरणं व्याचक्षाणो गोविन्दस्वामी, "ऋतुमत्याः कन्यकायाः अप्रदाने भ्रूणहत्यातुल्यो दोषोभवतीतिवक्तुकामः कन्यादानप्रकरणमारभते" इत्यवतारयत्। अत एवास्य श्लोकस्याऽस्मदुक्तार्थ एवसमञ्जसः॥ किञ्च त्रिवर्षमध्येऽपि यदियाचमानाय गुणवतेवराय न ददाति तदैव पित्रादेर्भ्रूणहत्यादोषः। यतो बोधायनः—

"ययाचतेचेद्देयं स्याद्याचतेचेत् पृथक् पृथक्। एकैकस्मिन् ऋतौ दोषं पातकं मनुरब्रवीत्"। इति याच्यमानायाः कन्याया अप्रदान एव दोषं प्रशास्ति॥

वसिष्ठश्च कुल्यैस्सकामामभियाच्यमानां" इति याच्यमानतया कन्यां विशिनष्टि॥ सकामामित्यनेन कन्याभिप्रायस्यापि आदरणीयताद्योत्यते॥ एवं च यावत् त्रिवर्षमेव रजो दर्शनात्पित्रादीनां दानाधिकार इति स्थितम्। ततस्तु चतुर्थ वर्षे. पित्रादेर्दानाधिकारो निवर्तते इत्युक्तम् प्राक्।

तत्राऽपि यदिकन्या सदृशं गुणहीनं वा न वृणुयात् तत्परमुत्सर्गशास्त्र दृष्टं वृषलीत्वं दुर्वारमेव। तद्वोढुश्च वृषलीपतित्वं॥ सर्वेमि-

दमभिप्रेत्यैव "अप्रयच्छन् समाप्नोति भ्रूणहत्या मृतावृतौ"। (याज्ञ-2-64) इति वचनं व्याचक्षाणो विज्ञानेश्वराचार्यः "अतो यस्याधिकारः, सोऽप्रयच्छन् भ्रूणहत्या मृता वृतौ प्राप्नोति। एतच्चोक्तलक्षणवरसंभवे वेदितव्यम्" इति व्याचख्यौ। तत्र स्मृतौ प्रतिपादितलक्षणसम्पन्नवर संभवेऽपि यदा ऋतुमतीं कन्यां पित्रादिर्नप्रयच्छति। तदा प्रभृति प्रत्यृतु भ्रूणहत्यादोषं प्राप्नोतीति तदर्थः ॥

वरलक्षणानिच प्रथमं कन्यालक्षणान्युक्त्वा तदतिदेशपूर्वकं निर्दिष्टानि याज्ञवल्क्येन ॥

"एतैरेवगुणैर्युक्तः सवर्णः श्रोत्रियो वरः
यत्नात् परीक्षितः पुंस्त्वे युवा धीमान् जन प्रियः" इति॥ I-55)
अतिदिष्टानिच लक्षणानि

"अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्" (I-52)
"अरोगिणीं भ्रातृमतीं असमानार्ष गोत्रजाम्।
पञ्चमा त्सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा"॥ (I-53)
दशपूरुष विख्याता च्छ्रोत्रियाणां महाकुलात्।

स्फीतादपि न सञ्चारिरोगदोषसमन्वितात्"॥ (I-54)
इत्युक्तानन्यपूर्वत्वादीन्येव ॥

अत्रानन्यपूर्वकत्वं वरलक्षणेषु अतिदिशन्मुनिः द्वितीयभार्यात्वेन कन्यकादानमप्यर्थात् प्रतिषेधति। तच्च विद्यमानभार्यायाः सुरापानादिदोषाभावएव। यथा स एव

'सुरापी व्याधिता धूर्ता वन्ध्यार्थघ्न्य प्रियंवदा।
स्त्री प्रसूश्चाधिवेत्तव्या पुरुष द्वेषिणी तथा॥"

(याज्ञ-I-73) इति।इममेवार्थमभिप्रेत्याऽऽपस्तम्बोऽप्याह—

"धर्मप्रजासंपन्ने दारे नान्यां कुर्वीत" (2-11-12) । इति । एवम-नन्यपूर्वत्वादिषु बहुषु गुणेषु विवक्षणीयतया प्राप्तेषु विना सापिण्ड्यादिदोषान् अवश्य विवक्षणीयान् गुणानाह — माधवीयेयमः ।

"कुलंच शीलञ्च वपुर्वयश्च विद्यांच वित्तंच सनाथताञ्च ।
एतान् गुणान् सप्त परीक्ष्य देया कन्याबुधैः शेषमचिन्तनीयम्" ।इति॥

एवं कुलादिगुणसम्पन्नायैव कन्यादातव्या, विवाहश्च प्राग्रजोदर्शनात्कर्तव्यः,इत्ययमर्थो न सर्वसुलभस्स्यादित्येव मन्वादिभिर्गौणोऽपिकालोऽभ्यनुज्ञायते ॥

कन्चिद्रजोदर्शनानन्तरं त्रिवर्षादूर्ध्वमपि स्वयंवराधिकारः स्मर्यते ॥ यथाह विष्णुः । " ऋतुत्रयमुपास्यैव कन्या कुर्यात् स्वयंवरम्" इति । "इदं विशिष्टगुणवरलाभविषयम्" इति माधवादिभिर्व्याख्यानम् ॥

ननु यद्यप्येवं कन्यकानां रजः प्रादुर्भावात् परं यावद्वर्षचतुष्टयमस्त्येव विवाहाभ्यनुज्ञा । स तु विवाहो न धर्माय भवेत् । यस्मात् ' पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता । भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता" इति इदं कश्यपवचनमुदाहरन् अपरार्कः - "वृषली धर्मोऽनधिकारिणी" इति व्याचख्यौ । तस्मात् "कामतस्तु प्रवृत्तानामिमास्युः क्रमशोऽवराः । मनु. III-13 ) इत्यसवर्णोद्वाहाऽभ्यनुज्ञावद्भोग एव केवलमभ्यनुज्ञायत इति युक्तम् ।

सत्यमुक्तं "वृषली धर्मोऽनधिकारिणी" इति अपरार्केण । तत्तु सदृशवरसम्भवेऽपि अदत्ताया एवेति न्याय्यम् । यतोऽनेनैव परस्तात् " त्रीणि वर्षाणी"त्यादि मनुबोधायन वचनाभ्यां पितृशासनोदीक्षणस्वयंवरौ प्रतिपादितौ दृश्येते॥ किञ्चात्र दोषाऽभावः स्पष्टमेव स्म-

र्यते मनुना—यथा "त्रीणि वर्षाणी"त्यादिना वर्षत्रयप्रतीक्षास्वयं-वरविधानाऽनन्तरम्,

"अदीयमाना भर्त्तारं अधिगच्छेद्यदि स्वयम् ।
नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति"(IX-91)

इति अत्र च एनश्शब्दवाच्यो वृषलीत्वरूपो दोष एव। स्मृत्यन्तरेषु तस्यैव दर्शनात् । न च कन्याहरणनिमित्तकं राजदण्डहेतुभूतं किल्बिषमपोद्यते इति वाच्यम् ।

"योऽकामां दूषयेत् कन्यां स सद्यो वधमर्हति ।
सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः ॥" (VII-304.)
"कन्यां भजन्तीमुत्कृष्टं न किञ्चिदपि दापयेत्।"(VIII-365)

इति तुल्योत्कृष्टयोः किल्बिषाऽभावस्याऽष्टमाध्याये स्त्रीसंग्रहणाख्ये प्रकरण एव प्रतिपादितत्वात् ॥

अपिचास्य विवाहस्य धर्मार्थताऽन्यत्रापि स्मर्यते ॥ माधवीये स्वयंवरं प्रकृत्य **नारदः** ।

" सवर्णमनुरूपञ्च कुलशीलवयःश्रुतैः ।
सह धर्मं चरेत्तेन पुत्रांश्चोत्पादयेत्ततः ॥ "

इति ॥ अत्र "कन्या सवर्णं वरं प्राप्य" इत्यध्याहृत्य योजना कृता **माधवाचार्येण** । न चास्य वचनस्य पित्रादिदात्रभावप्रयुक्ताऽनृतुमतीस्वयंवरविषयत्वं शङ्कनीयम्! विशेषाऽदर्शनात् ॥ "अदीयमाने"ति मनुवचनेनैकार्थता प्रतीतेश्च ॥ तस्मान्नायं विवाहः केवलभोगाय, अपि तु धर्माय प्रजायै चेत्यनवद्यम् ॥

(II) मनुस्मृति विचारे यदुच्यते **वयोनिर्णयकारैः**"त्रीणि वर्षाण्यृतुमती"त्यादिवचनानि शूद्रविषयाणीति तदिहोक्तरीत्या प्रत्युक्तं

द्रष्टव्यम् । "नैनः किञ्चिदवाप्नोति" इत्यत्र वृषल्या वृषलीत्वं वृषलस्य वृषलीपतित्वञ्च न भवतीति व्याहतत्वात् ॥

यच्चात्र लिङ्गमुपन्यस्तं शूद्राविषयत्वे.
"पित्रे न दद्याच्छुल्कन्तु कन्या मृतुमतीं हरन् ।
स हि स्वाम्या दतिक्रामे दतूनां प्रतिरोधनात् ।" (IX-93)
इति शुल्कप्रतिषेधः शूद्रविषयत्वं गमयतीति ॥ तदप्यसिद्धम् । शुल्कवदासुर विवाहः ब्राह्मणविषयेऽपि धर्मत्वेनाभ्यनुज्ञायत एव।

"षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोवरान् ।
विट् शूद्रयोस्तुतानेव विद्याद्धर्म्यानराक्षसान्" ॥ (मनु-III-23.)

इति । अस्तु वा वचनमात्रमिदं शूद्रविषयम् । प्रकरणन्तु सर्वथा न शूद्रमात्रविषयं भवितुमर्हति । इदं हि स्त्रीपुंसधर्माख्यं प्रकरणं चतुर्वर्णसाधारणमेव ॥ अवान्तरमपि प्रकरणं कन्यादानकालमुद्दिश्य प्रक्रान्तं दृश्यते । अत्र

"उत्कृष्टायाभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथा विधि" (IX-88)

इत्युपक्रमो दृश्यते । अस्मिन् वचने उत्कृष्टवरलाभे सति अप्राप्तविवाहकालां कन्यां यथा विधि दद्यादित्यर्थो लभ्यते ॥ दानञ्चात्र विवाहोपलक्षणं तत्कालश्च,

"अमन्त्रिकातु कार्येयं स्त्रीणामावृदशेषतः ।
संस्कारार्थं शरीरस्य यथा कालं यथा विधि।" मनु (III-66.)

इत्युपनयनादनिर्दिष्टो गर्भाष्टमादिरेवेति युक्तम् । स हि द्विजकन्यामात्रगोचरः कथं शूद्रां गोचरयेत् ॥ उपसंहारेच

"नानुशुश्रुम जात्वे तत् पूर्वेष्वपि हि जन्मसु ।
शुल्कसंज्ञेन मूल्येन छन्नं दुहितृविक्रयम्" (IX-100.)

इति क्रियमाणः शुल्कनिषेधोऽपि द्विजातिमेव गोचरयति ॥ यश्च " आददीत न शूद्रोऽपि शुल्कं दुहितरं ददत् इति " शूद्रग्रहणं तत् अपि शब्दात् कैमुत्येन द्विजाति विषयत्वमेव प्रकरणस्याऽऽपादयति॥अन्यच्च प्रकृत समाने प्रकरणे समानमेवार्थं स्मरन् बोधायनोऽपि ' दद्यात् गुणवते कन्यां नग्निकां ब्रह्मचारिणे। " इत्युपक्रममाण ब्रह्मचारिपदेन प्रकरणस्य द्विजातिपरत्वमेव बोधयतीति व्यक्तम् ॥

III यदपि मनुस्मृतौ 'त्रीणिवर्षाण्युदीक्षेत''इत्यादीनामापद्धर्मत्वमुच्यते वयो निर्णयकारैः,यथा,"अतः परं प्रवक्ष्यामि योषितां धर्ममापदि' (IX-50) इत्युपक्रम्य "एष स्त्रीपुंसयोरुक्तो धर्मो वो रति संज्ञितः। आपद्यपत्यप्राप्तिश्च" (IX-103) इत्यु संह्रियमाणप्रकरण मध्यपठितानां सर्वेषामापद्धर्मत्वादिति ॥ तन्न । इदं हि महाप्रकरणं स्त्रीपुंधर्माख्यं, "अतः परं प्रवक्ष्यामि योषितां धर्ममापदि । " इत्यारभ्य, "यथा विध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम । मिथो भजेताऽऽप्रसवात् सकृत्सकृदृतावृतौ"। IX-70 इत्यन्तं नियोगधर्मः कथ्यते।स एवाऽऽपद्धर्म इतियुक्तम्॥ तदनन्तरं "न दत्वा कस्य चित्कन्यां पुनर्दद्यात् विचक्षणः ।" (IX-71) इत्यारभ्य मुख्य एव खलु धर्मः कथ्यते । उपसंहारेच "एष स्त्रीपुंसयोरुक्तो धर्मो वो रति संज्ञितः। आपद्यपत्यप्राप्तिश्च"(IX-103 इत्यत्र स्त्रीपुंसयोः धर्मउक्तः आपदि नियोगेन येयमपत्यप्राप्तिः सा चोक्ता, इत्येवाऽन्वयः सङ्गतः। आपदि स्त्रीपुंसयोर्धर्मइति तु न सङ्गच्छेत ॥

"पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः । संयोगे विप्रयोगे च धर्मान् वक्ष्यामि शाश्वतान्" इत्युपक्रम्य साकल्येन संयुक्तस्त्रीधर्मानुपादिश्याऽनन्तरं बीजयोनिबलाबलञ्च निरूप्य ततः परं खल्विदं प्रतिज्ञायते ॥

"एतद्वः सारफल्गुत्वं बीजयोन्योः प्रकीर्तितम् ।
अतः परं प्रवक्ष्यामि योषितां धर्ममापदि"॥(IX-56 इति

एतदुपरितनानां सर्वेषामापद्धर्मत्व मभिप्रेतमित्यपि न युक्तम् । "आपद्यपत्यप्राप्तिश्च" इत्यपत्यप्राप्तिग्रहणवैय्यर्थ्यापत्तेः । तस्मान्नि-योगेनाऽपत्यप्राप्तिमात्रमिहाऽऽपद्धर्मः । तदन्ये मुख्या एव धर्मा इति नात्र त्रिवर्षोर्दीक्षणादौ आपद्धर्मत्वशङ्कावकाशः ॥

(IV) यच्चापीदमपरमुच्यते वयो निर्णयकारैः। मनुः सर्वथा ऋतुमत्याः कन्यायाः विवाहं नाङ्गीकारोतीति—यथा "अपि च ऋतुमती त्वस्य कन्या दोषेषु परिगणनं नास्तीत्येव तावदसिद्धम् । प्रथमं तस्यैव परिगणनात् । क्षतयोनिर्हि ऋतुमतीनाम भवति । क्षतयोनिश्च कन्या सपिण्डादिवद्विवाह्यैव न भवतीत्यादितएव,विवाहप्रकरणे मनुःप्रतिषेधती"त्यादिना ग्रन्थसन्दर्भेण, तत्खलु दुस्साधम् । तत्र हि वचनद्वयं मनोरुदाहृतम् ।

"असपिण्डा च यामातुः असगोत्रा च यापितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मण्यमैथुनी ॥" III—5.
"सर्ववर्णेषुतुल्यासु पत्नीष्वक्षतयोनिषु ।
आनुलोम्येन संभूता जात्याज्ञेया स्तएवते।" मनु X—5.

इति ।

अत्र "असपिण्डा च या मातुः"इति वचने "दारकर्मण्य मैथुनी" इति वैद्यनाथीय स्मृति मुक्ताफलो दाहृतःपाठः ।"अमैथुनी—अक्षतयोनि"रिति तदीय व्याख्या च वयो निर्णयकारैराद्रियेते।इदन्तु वचनं न केवलं वैद्यनाथीय एव दृश्यते।परन्तु मिताक्षरा, अपरार्क,माधवीय,निर्णयसिन्धु मदनपारिजातेष्व प्युपलभ्यते। सर्वत्रापि "दारकर्मणि मैथुने" इत्येव पाठः । मदनपारिजाते "मैथुने निधुवने" इत्यपि व्याख्यातम् ॥ सर्वानिमान्निबन्धान् मुद्रितां मूलस्मृतिं कुल्लूकभट्टकृतान्तद्व्याख्याञ्चोपेक्ष्य स्मृतिमुक्ताफलपाठमेव साधीयांसं मन्यन्ते । एतत्पाठाऽऽदरणे युक्तिरप्युपन्यस्ता । "सर्ववर्णेषु

तुल्यासु पत्नीष्वक्षतयोनिषु" इति वर्णव्यवस्थापरे वचने अक्षतयो
य एव याः पत्नीत्वमापादिताः तासु जातानामेव पुत्राणां सवर्णत
मुच्यते । तस्माद्विवाहप्रकरणेऽपि तदर्थकमेव कन्या विशेषणमु
स्स्यादिति, पाठान्तरन्तु मुद्रणलेखनप्रमादकृतामिति च॥ सर्वश्चैत
भ्युपगच्छामः । यतो वैद्यनाथदीक्षिताः परमं प्रमाणं द्राविडानाम
अभिप्रेतार्थस्तु न सिध्यति वयोनिर्णयकृताम् ॥ ते खल्वक्षतयो
पदं अनृतुमतीवाचकं परिकल्प्य स्वाभिमतमर्थं साधयन्ति । तद्व
व्याख्या विरुद्धम् ॥ मनुस्मृतिं व्याचक्षाणाः मेधातिथिप्रभृतयस्
र्वेऽपि पदमिदमन्यथैव व्याचख्युः॥ यथा ' सर्ववर्णेषु तुल्यासु" इ
स्य व्याख्यानावसरे मेधातिथिः । "अक्षतयोनिग्रहणं पुनर्विवा
पत्नीत्व माशङ्कमानं निवर्तयति । सहोढजकानीन मानणां च" इति
सर्वज्ञ नारायणः । " अक्षत योनिषु. परिणेतुरन्येनाऽसं स्पृष्टास्
एतेन पौनर्भवस्यापि अब्राह्मण्यमुक्तम् ॥" राघवानन्दः। "अक्षत
निष्विति विशेषणात् कानीनादेर्द्विजत्वं गौणम्" ॥ नन्दनः । "अक्
योनिषु अनन्यपूर्वासु"॥ रामचन्द्रः। "सम्भोगादक्षता योनयः या
ताः, तास्विति." ॥ सर्वेऽप्यमी अक्षतयोनि शब्दस्य अस्पृष्टमैथुना
कन्यां वाच्यतयाऽभिप्रयन्ति ॥ कुल्लूकभट्टस्तु—यद्यप्यस्मिन् श्लो
अक्षतयोनिपदं स्पष्टं न व्याचष्टे, अन्यत्र तु स्पष्टमाह—

"पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ।
नाऽकन्यासु क्वचिन्नृणां लुप्तधर्मक्रिया हि ताः॥" (9-8 22

इत्यत्र। व्याख्याया अतिविस्तृतत्वात् सर्वत्र सुलभत्वाच्च
लिख्यते । तद्विवक्षितार्थस्तु, अकन्याऽक्षत योनिः सात्र पुरुषान्त
भुक्तपूर्वा इत्ययमेव ॥

एवमन्यत्रापीदं पदं व्याख्यातं दृश्यते । यथा बोधायन ध
शास्त्रे—

"निसृष्टायां हुते वापि यस्यै भर्ता म्रियेतसः ।
साचेदक्षतयोनिस्स्याद्गतप्रत्यागता सती ।

पौनर्भवेन विधिना पुनः संस्कार मर्हति" (12-18) अस्य गोविन्दस्वामि व्याख्या —

"निसृष्टा उदकपूर्वं दत्ता । हुते वापि होमेऽपि निर्वृत्ते । भर्ता म्रियेत। साचेत् भार्या अक्षतयोनिः अस्पृष्ट मैथुना स्यात् । गतप्रत्यागता" इति ॥ याज्ञवल्क्य स्मृतावपि ।

"अक्षता च क्षता चैव पुनर्भूस्संस्कृता पुनः ।
स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत्"॥ (1 67)

अत्र मिताक्षरा —

"अन्यपूर्वा द्विविधा पुनर्भूः स्वैरिणी चेति॥ पुनर्भूरपि द्विविधा। क्षताऽक्षताच्च । तत्र क्षता संस्कारात् प्रागेव पुरुषसम्बन्ध दूषिता । अक्षता पुनः संस्कार दूषितेति" ॥ अत्रैव, अपरार्कः व्याख्या । प्रथमं अक्षतयोनिं पुनर्भुवं व्याख्याय "या कौमारं पतिमुत्सृज्याऽन्यैस्सह सुरतमाचर्य पुनः पूर्वमेव पतिं परिगृह्णाति सा गतप्रत्यागता क्षतयोनिश्च" इति. अत्र स्पृष्टमैथुना क्षतयोनिः।अस्पृष्टमैथुना अक्षतयोनिरित्यर्थः प्रतीयते॥अतश्च,अमैथुनी अक्षतयोनिरिति व्याचक्षाणैर्वैद्यनाथदीक्षितैरपि अस्पृष्टमैथुनेत्येवाऽर्थो विवक्षितः स्यादित्येव युक्तम् ॥ तस्मादेतद्व्याख्यावष्टम्भेन 'मनुः नतुमतां विवाहमभिप्रैति । किन्तु प्रतिषेधमेवाऽभिप्रैतीति" साधनं सुतरामनुपपन्नं ॥

तदेवं वयो निर्णयोदाहृत वचनानां माधवीयादि निबन्धानाञ्च सावधानपर्यालोचनायां ऋत्वनन्तरमपि कन्यकानां गुणवद्वराऽलाभे वर्षत्रयं दानकालः । तत्परं वर्षमेकं स्वयंवरकाल इत्यविवादं सिद्ध्यतीत्यलमति प्रपञ्चेन—

॥ इति स्मृत्यैकवाक्यता नाम प्रथमः परिच्छेदः ॥

---

## परिच्छेदः II.

## प्रत्येकस्मृतिविमर्शः ॥

अथेदानीं प्रत्येकं मन्वादिस्मृतीना मभिप्रायं किंचिदिवविमृशामः ॥ यद्यपीदं दुष्करं, दुर्लभत्वात् सर्वासां स्मृतीनां ॥ ताः खलुबह्वयः । मनुः, वृद्धमनुः, गौतमः, वृद्धगौतमः, पराशरः, वृद्धपराशरः, इत्यादिभेदै-रुदाह्रियन्ते। निबन्धेषु तत्संग्रहरूपाश्च ग्रन्थाः उदाह्रियन्ते। यथा षट्त्रिंशन्मतं, चतुर्विंशतिमतं, स्मृत्यर्थसारः, संग्रहः, इत्यादि॥ तासां साकल्येनानुपलब्धिर्नेदानीमेव। यतः षट्शतेभ्यः प्रागेव वर्षेभ्यः स्साकल्येनानुपलब्धिः प्रतिज्ञायते माधवाचार्यैः पराशरमाधवीये उपोद्घाते ॥

स्मृतयो बह्वयः.

स्मृत्यन्तरानु सारेण विषयस्य व्यवस्थितिः ।
कल्पनीयेतिचेत् ब्रूहि सर्वज्ञं मन्यसाधकं ॥

यावत्यः स्मृतय स्तासां सर्वासामनु सारतः ।
साकल्याद्वेदस्मद्रादेः तत्र शक्तिर्नविद्यते ॥
स्वेनदृष्टास्तु यावत्यः तासामित्यप्ययुक्तिमत् ।
क्वचित्कदाचिदन्यासां दर्शनादव्यवस्थितेः ॥ इति,

इदानीं आनन्दाश्रममुद्रिताः सप्तविंशतिः स्मृतयः उपलभ्यन्ते । ताश्च विशकलितस्मृत्यवयवा एव, यतः, क्वचिद्दानं, क्वचित्प्रायश्चित्तं, क्वचित् शुद्धिः, क्वचिदाशौचं, इत्येकदेशार्थो दृश्यते । क्वचित्स्यात् सामग्र्यमपि॥ सत्यप्येवमास्माकैः निर्विवादमभ्युपगम्यमानाःस्मृतयः सन्ति - यथा मनुस्मृतिः - याज्ञवल्क्यस्मृतिः, पराशरस्मृतिः, बोधायनधर्मः, आपस्तम्बधर्मः, गौतमधर्मः वसिष्ठधर्मः,

सर्वसम्प्रतिपन्न-मूलस्मृतयस्सन्ति.

इति ॥ अत्र प्रथमोद्दिष्टामनुस्मृतिः, मेधातिथ्यादिभिः अनेकैः, व्याख्याता, सार्वदेशिकीत्यविवादं ॥ याज्ञवल्क्यस्मृतिश्च मिताक्षराद्यनेकव्याख्यायुक्ता सर्वैः प्रमाणीक्रियते ॥ पराशरस्मृतिस्तु माधवव्याख्याबलादेवाऽविलोपमापन्ना ॥ बोधायनधर्मोऽपि गोविन्दस्वामिव्याख्यया, बोधायनिनां वेदवदध्ययने न च प्रतिष्ठामाप ॥ आपस्तम्बगौतमधर्मौहि, उज्वला मिताक्षराख्यहरदत्तव्याख्याभ्यां, याजुषैः छन्दोगैश्च गुरुमुखादध्ययने न च समीचीनां स्थितिमनुभवतः ॥ वासिष्ठन्तु धर्मशास्त्रं बहृचानामध्ययनेनैव अप्रच्युतावयवेति निश्चीयते ॥

आस्वपि मनुयाज्ञवल्क्यस्मृत्योः प्राधान्यं स्मर्यते। स्मृतिमुक्ताफले अंगिराः ।

यत्पूर्वं मनुना प्रोक्तं धर्मशास्त्रमनुत्तमं ।<br>
नहि तत्समतिक्रम्य वचनं हितमात्मनः ॥<br>
वेदादुपनिबद्धत्वात्प्राधान्यन्तु मनोः स्मृतं ।<br>
मन्वर्थ विपरीतासु या स्मृतिः सा न शस्यते ॥

सार्वभौमीये,--

एकतः सर्वमुनयः याज्ञवल्क्यस्तथैकतः ।<br>
यदुक्तवान् धर्मशास्त्रं तत्प्रमाणं प्रतीयत ॥ इति ।

इह तु मनुस्मृत्यभिप्रायः प्रथमं प्रकरणे निरूपितप्रायएव । ततः किंचिदिव संगृह्योच्यते । प्रथमं तावद्द्वितीयेऽध्याये ।

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।<br>
मनुः· संस्कारार्थं शरीरस्य यथाकालं यथाविधि ॥ II—26.<br>
वैवाहिको विधिः स्त्रीणां औपनायनिकः स्मृतः ।<br>
पतिसेवा गुरौ वासः गृहार्थोऽग्निपरिक्रिया ॥ II—27.

इत्याभ्यां श्लोकाभ्यां स्त्रीणां विवाहस्य उपनयनस्थानीयत्वात् आवश्यकता,गर्भाष्टमस्य तत्कालता चेत्यादि प्रत्यपादि । नवमेऽध्याये,

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीं ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥ III—94.

इत्यनेन वचनेन कन्यायाः मुख्यस्य विवाहकालस्य अष्टमद्वाद शे वयसी पूर्वोत्तरावधी, इति द्योत्येते॥ "प्रदानं प्रागृतोः" इत्यादि शास्त्रान्तरसमानत्वात् । आपस्तम्बाभिमतेनोऽपनयनमुख्यकालेः समानार्थत्वाच्च ॥ किञ्च, समाप्तविद्यं स्नातकं प्रति अतीतमुख्यकाल कन्या विवाह्यतया विधीयते, इत्यपि हि नयुक्तं। तस्मादष्टमादिद्वा दशान्तानि वयांसि मुख्य एव कालः ॥ तथापि तमुख्यकालापेक्षय कन्यां निर्गुणाय दद्यात् ,

काममामरणात्तिष्ठेत् गृहे कन्यर्तुमत्यपि ।
नचैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥ III—8.

इति निर्गुणसंप्रदानक कन्यादाननिषेधात् ॥ अतएव गुणवद्वर लाभाऽलाभाऽपेक्षया मुख्यकालात्पुरस्तात् परस्ताच्च गौणकालावपि स्मर्येते ॥ यथा,

उत्कृष्टायाऽभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां तस्मै दद्यात्कन्यां यथाविधि॥ III—88

इति मुख्यकालादर्वाक् ॥

त्रीणिवर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्मात् विन्देत सदृशं पतिम्॥ III-30.

इति रजः प्रादुर्भावात्परं वर्षत्रयं ॥ त्रिवर्षात्ययेपितुः प्रत्यवायो ऽपिभवत्येव, कन्यायां विवाहस्य द्विजातित्वाऽऽपादकसंस्कारत्वात स एव प्रत्यवायः "कालेऽदाता पिता वाच्यः" III—4. इत्य- नेन उच्यते ॥ यद्यपि स्वयंवरकालस्योत्तरावधिर्नस्मर्यते, "विन्देत सदृशं पतिं,"इति वचनात्, सदृशगुणवरलाभकाल एव अवधिरिति न्याय्यं,तथापि उपनयनधर्मातिदेशात् षोडशवर्षात्यये पातित्यं दुर्वा रमेव ।

अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥ II—39.
नैतैरपूतैर्विधिवत् आपद्यपि हि कर्हिचित् ।
ब्राह्मान्यौनांश्च संबन्धा नाचरेत् ब्राह्मणस्सह ॥

इति पातित्यस्मरणात् ॥ ततश्च अर्वागेव षोडशवर्षादवश्यं विवाहयितव्याः कन्यकाः इत्ययमेवाऽभिप्रायो मनोः प्रतीयते ॥

याज्ञवल्क्यस्मृतौ तु न विवाहकालः कंठतो निरूप्यते । तथापि,

"पिता पितामहो भ्राता सकुल्यो जननी तथा ।
याज्ञवल्क्यः कन्याप्रदः पूर्वनाशे प्रकृतिस्थःपरः परः ॥ I—63.
अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ।
गम्यन्त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरं॥ I—64.

इत्यृतुदर्शनात्परमदाने पित्रादीनां दोषस्मरणात्, दात्रभावे स्वयंवरविधानाच्च, ऋतुसमागमात्प्रागवश्यं कर्तव्यो विवाहः कन्यकानामित्ययमर्थो लभ्यते ॥ तदापि गुणवत एव कन्या दातव्या, नागुणाय । यतो दत्ताया अपि कन्यकायाः गुणवत्तरलाभे पूर्ववरादाच्छिद्यदानं विदधाति ।

सकृत्प्रदीयते कन्या हरंस्तांचोरदंडभाग् ।
दत्तामामपि हरेत् पूर्वान् श्रेयांश्चेद्वर आव्रजेत् ॥ इति ।

अतएव, "अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ" इति श्लोकं व्याचक्षाणो विज्ञानेश्वराचार्यः "एतच्चोक्तलक्षणवरसंभवे वेदितव्यं" इति व्याचख्यौ ॥ ततश्च यथा कन्यकानामृतुकालो न वृथाऽतीयात् तथा गुणवद्वरसंपादनेन विवाहयितव्याः कन्यकाः। अन्यथा पित्रादेः भ्रूणहत्यादोषो दुर्वार एव ॥ अत्रापि स्मृतावृतुमती सर्वथा न विवाह्येत्ययमर्थो न लभ्यते । परन्तु ऋत्वनन्तरं पूर्वं वा सदृशं वरमन्विष्य कन्या दातव्येत्येव प्रतीयते ॥

बोधायनस्तु प्रथममनृतुमत्या एव कन्यायाः दानं मुख्यतया विदधाति । यथा,

बोधायनः "दद्यात् गुणवते कन्यां नग्निकां ब्रह्मचारिणे ॥ अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलां" ॥ (4. 1. 12.) इति,

तदसंभवे रजोदर्शनानन्तरं यावत्त्रिवर्षमदाने भ्रूणहत्यादोषं वदति ।

त्रीणि वर्षाण्यृतुमतीं यः कन्यां न प्रयच्छति ।
स तुल्यंभ्रूणहत्यायै दोषमृच्छत्यसंशयं॥ (4-1-13) इति,

ऋतुमत्याः कन्यायाः यावत्त्रिवर्षमदाने पित्रादेः दातुः एको भ्रूणहत्यादोषो भवतीत्येतत् कन्यायाः सदृशवराऽलाभ एवं । यदि सदृशवरलाभेऽपि न दीयते तदा पित्रादेः प्रत्युत भ्रूणहत्यादोष स्मरति ।

न याचते चेदेवं स्यात् याचते चेत् पृथक् प्रथक् ।
एकैकस्मिन् ऋतौ दोषं पातकं मनुरब्रवीत्॥ (4-1-14) इति।

कन्यका च रजोदर्शनानन्तरं संवत्सरत्रयमेव पितृशासनमपेक्षेत। प्राप्ते चतुर्थे वर्षे स्वयमेव भर्तारं वृणुयादित्याह ॥

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनं ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिं ॥ (4-1 15) इति,

तदापि गुणवद्वराऽलाभे निर्गुणमपि भर्तारं वृणुयादेवेत्याह—

अविद्यमाने सदृशे गुणहीनमपि श्रयेत् ॥ (4-1-15) इति,

अत्रैतद्व्याख्याकृत् गोविन्दस्वामी; "गुणाः अभिजनादयः । न जातिः" । इति जातिरवश्यं विवक्षणीयेति व्याचख्यौ ॥ सति चैवं बोधायनो नर्तुमती विवाहं सर्वथा प्रतिषेधति, गुणवद्वरलाभाऽपेक्षया तु रजो दर्शनानन्तरमपि यावत्त्रिवर्षमभ्यनुजानात्येवेति स्पष्टं ॥

आपस्तम्बः ॥

आपस्तम्बेन सगोत्राय दुहितरं न प्रयच्छेत् (2-1-15) इत्यादिभिः कन्यादानं विवाहभेदाश्च प्रतिपाद्यन्ते । कालविशेषस्तु न स्मर्यत इत्यतोऽत्र न विचाराऽवकाशः ॥

गौतमः

गौतमेन तु मुनिना विवाहकालः प्रतिपाद्यत एव । यथा । "प्रदानं प्रागृतोः" (17-21) इत्यृतोः प्राक् प्रदानकालः स्मर्यते । अदाने पित्रादेः दोषश्च ॥ सू – अप्रयच्छन् दोषी ॥ (17-22) इति ॥ एकीयमतेन अत्यन्तबालिकाया अपि दानं विधीयते ।

"प्राग्वाससः प्रतिपत्तिरित्येके" (17, 23) इति॥ ऋत्वनन्तरमपि दानकालः स्मर्यते । यथा—

"त्रीन् कुमार्यृतूनतीत्य स्वयं युज्येताऽनिन्दितेनोत्सृज्य पित्र्यानलङ्कारान्" (18-..) इति रजो दर्शनानन्तरं यावदृतुत्रयं दानकालः ॥ ततःपरं स्वयंवरकाल इत्यभिप्रायः । अत्रापि स्मृतौ न सर्वथा प्रतिषिध्यते ऋतुमती विवाहः ॥ अत्रोपदिश्यमानमृतुत्रयप्रतीक्षणं गुणवद्वरलाभविषयं, तदलाभे वर्षत्रयादीक्षणमेवेति व्याख्यातारः ॥

वसिष्ठः

वासिष्ठेऽपि धर्मशास्त्रे नग्निकाया विवाहः प्रशस्तोऽभिप्रेयते । वराऽलाभाऽपेक्षया रजोदर्शनानन्तरमपि वर्षत्रयं विवाहोऽप्यनुज्ञायत एव । तथा च तदीया वचनानुपूर्वी । "कुमार्यृतुमती त्रीणि वर्षाण्युपासीतोर्ध्वं त्रिभ्यो वर्षेभ्यः पतिं विन्देत्तुल्यं" (17, 60) अथाप्युदाहरन्ति (18-60)

पितुः प्रमादात्तु यदीह कन्या वयः प्रमाणं समतीत्य दीयते
सा हन्ति दातारमुदीक्षमाणा कालातिरिक्ता गुरुदक्षिणेव॥ (71)॥

प्रयच्छेन्नग्निकां कन्यां ऋतुकालभयात्पिता ।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितर मृच्छति ॥ 62 ॥

यावच्च कन्या मृतवः स्पृशन्ति कुल्यैस्सकामा मभियाच्यमानां।
भ्रूणानि तावन्ति हतानि ताभ्यां माता पितृभ्यामिति धर्मवादः॥
63 ॥ इति च ।

एवं च स्मृतीनामेकवाक्यतया वा पार्थक्येन वा, अर्थपर्यालोचनायां कन्यकाना मृत्वनन्तरमपि गुणवद्वराऽलाभे वर्षत्रयं दानकालः । ततःपरं वर्षमेकं स्वयंवरकालः इत्यविवादम् ॥

पराशरस्तु रजो दर्शनात् प्रगेव विवाहं मन्यते । अकरणे दोषं
पराशरः ॥ च । तथा च तद्वचनानि ।

अष्टवर्षा भवेद्गौरी नव वर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥ VII—4.
प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिबन्ति पितरः स्वयं ॥ VII—5.
माता चैव पिता चैव ज्येष्ठो भ्राता तथैवच ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलां ॥ VII—6.
यस्तां समुद्वहेत्कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥ VII—7.
यः करोत्येकरात्रेण वृषली सेवनं द्विजः ।
सभैक्षभुक् जपन्नित्यं त्रिभिर्वर्षै र्व्यपोहति॥ VII—8. इति ।

यद्यपि संप्रतिपन्नतया निर्दिष्टासु सप्तसु मूलस्मृतिषु इयमेकैव स्मृतिः रजो दर्शनात्प्राग् विवाहाऽकरणे कन्यायाः तत्पित्रादीनां तद्वोढुश्च दोषमात्रं प्रतिपादयति । न त्रिवर्षादिरूपं गौणकालम् ॥ तथापि प्रबलतरमनुस्मृति विरोधेन कथमियं प्रमाणी क्रियेत । मनुस्मृतेः प्राबल्यं च "यत्पूर्वं मनुना प्रोक्तम्" इत्यादिना प्राक् निरूपितमेव ।

ननु,, कृतेतु मानवा धर्माः त्रेतायां गौतमाः स्मृताः ।
द्वापरे शङ्खलिखिताः कलौ पाराशरस्स्मृतः ॥

इति कलावितरस्मृत्यपेक्षया पराशरस्मृतेरस्ति प्राधान्यम् ॥ सत्यमस्त्येवप्राधान्यम् । इयं खलु स्मृतिः कलिकालिकदुर्बलमानुषान् प्रति अशक्यानां धर्माणा प्रायश्चित्तानां च लघूकरणाय प्रवृत्ता । यथाऽह व्याख्योपोद्धाते माधवाचार्यः

कलौ हि पापबाहुल्यं दृश्यते स्मर्यतेऽपिच ।
नराः प्रायोऽल्पसामर्थ्याः तेषामनुजिघृक्षया ॥
समकोचयदाचारं प्रायश्चित्तं व्रतानि च ॥
"तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः"
इत्युक्तिमादावन्ने च प्रायुङ्क्त्वा कृपालुता ॥
वदे देशाध्ययनं कृष्या विप्रादि जीवनम् ।
इत्यादि वचसाऽऽचारे संकोचो भासते स्फुटम् ॥
प्राजापत्यं गोवधे स्यात् ब्रह्मघ्ने सेतु दर्शनम् ।
इति मुख्यवृत्तत्वोक्तेः सङ्कोचोऽत्रापि गम्यते ॥ इति ॥

सति चैवं कथं परमदयालुः मुनिः दुर्लभतरगुणवद्वरलाभे कलिकाले मन्वाद्युपदिष्टम् ऋत्वनन्तरं वर्षत्रयादिरूपं गौणकालं निराकुर्यादपि ॥ परन्तु द्वितीयेऽध्याये—

अतः परं गृहस्थस्य कर्माचारं कलौ युगे ।
धर्मं साधारणं शक्त्या चातुर्वर्ण्या श्रमागतम् ॥

इत्यादिभिः श्लोकैः साधारणधर्ममात्रमुक्त्वा अध्यायमुपसञ्जहार ॥ व्याख्याकारो माधवाचार्यस्तु उपोद्धात एव,

"कृष्यादि जीवनोपायाः द्वितीयेऽध्याय ईरिताः ।
चतुराश्रमधर्माश्च सूचिता आश्रमोक्तितः ॥

इति द्वितीयाध्यायादिमश्लोकश्रूयमाणाऽऽश्रमशब्दसूचितानभिप्रेत्य द्वितीयेऽध्याये मन्वादिस्मृतिभ्यः वचनानि सङ्कलय्य महता-

ग्रन्थसन्दर्भेण गर्भाधानादि संस्कारान् विवाहप्रकारानन्यानाश्रमधर्मांश्च स प्रपञ्चं निबबन्ध ॥

सप्तमे त्वृतुमती विवाहनिन्दा वचनानि यश्शक्तोऽप्यालस्य मदादिना मुख्यकाले कन्यां न प्रयच्छति तस्य, तत्कन्यायाः, तद्वोढुश्च नरकहेत्वशुद्धि कथनाय प्रायश्चित्तकथनायचेत्येव युक्तम्। अन्यथा किमिति प्रथम एवकाण्डेनाऽवक्ष्यत्। इदं खलु द्वितीयं काण्डम्. प्रायश्चित्तकथनायैव प्रक्रान्तम्। न आचारधर्मकथनाय। इत्थमेवाऽभिप्रेत्य श्रीमन्माधवाचार्योऽपि प्रथमाध्यायगत "युगेयुगे तु सामर्थ्यं शेषं मुनिविभाषितम् ॥ पराशरेण चाप्युक्तं प्रायश्चित्तं विधीयते ॥" I 24 इति श्लोकव्याख्यानावसाने स्पष्टमवोचत् । यथा

"एतदुक्तं भवति, नानामुनिभिः तत्तद्युगसामर्थ्यस्य प्रायश्चि-
'त्तस्य च प्रपञ्चितत्वात्तदुभयं पर्यालोच्य निन्दानिन्दयोः व्यवस्था क-
'ल्पनीया । यः पुरुषो युगसामर्थ्यं अनुसृत्य विहितानुष्ठानं प्रतिषि-
'द्धवर्जनं प्रमादकृतपापप्रायश्चित्तञ्च कर्तुं शक्तोऽपि न कुर्यात्तद्विष-
'याणि, "भ्रूणहत्यापि तु तस्याः साकन्या वृपलीस्मृता" इत्यादि नि-
'न्दावचनानि । अशक्तविषयं 'तेषां निन्दानकर्तव्या' (II - 3.)
'इत्यादिवचनम्" इति ॥

तस्मात् पराशरस्मृतिर्न तावदृतुमत्याः कन्यायाः विवाहं प्रतिषेधतीत्येव समञ्जसं ॥ एवमन्यास्वपि स्मृतिषु यानि कन्याया रजोदर्शने तस्याः तत्पित्रादीनां च दोषप्रतिपादनपराणि वचनानि तान्यविरोधेनैव मन्वादिस्मृतिभिरर्थवत्ता माप्नुवन्त्येवेत्यलमति विचारेण ॥

॥ इति प्रत्येकस्मृतिविमर्शो नाम द्वितीयः परिच्छेदः ॥

## परिच्छेदः III.

## गृह्यविचारः ॥

---

अथेदानीं गृह्यसूत्राणामर्थः किंचिदेव विमृश्यते ॥ तत्र शब्द-सन्दर्भाचारादिभिः पुरावृत्तमनुभिमानाः पाश्चात्यसरणि मनुवर्त-मानाः केचन विमर्शकाः गृह्यसूत्राणां स्मृत्यपेक्षया प्राचीनतां प्रामा-ण्यं च प्रबलतरं मन्यन्ते ॥ एतद्देशीयप्राचीनसरणिं अनुसरन्तस्तु पण्डिताः गृह्यसूत्राणां स्मृतिविहितगर्भाधानादिपुम्पसंस्काराणां कल्पमात्रोपदेशाय प्रवृत्तत्वात् स्मृतिभ्यो गौणमेव मन्यन्ते प्रामाण्यं॥ इममेवार्थं स्मृतिरपि काचन परिपोषयति ॥ यथा वैद्यनाथीये वर्णा-श्रमकाण्डे, देवलः ॥

> " मन्वादयः प्रयोक्तारो धर्मशास्त्रस्य कीर्तिताः ।
> तत्प्रयुक्तप्रयोक्तारो गृह्यकारास्तु मन्त्रतः ॥ इति "

तथाऽपि सम्यगवबुद्धानि गृह्यसूत्राणि सन्दिग्धस्मृत्यर्थनिर्णा-यकता माप्नुवन्तीत्यत्र न विवादाऽवसरः । अत इदं विमृश्यते ॥

ऋतुमतीविवाहसाधकलिङ्गानि

अत्र वयोनिर्णयकाराः खण्डचग्रन्थाभिप्रायतया ऋतुमती-विवाहसाधकानि चत्वारिलिङ्गान्युपन्यस्य क्रमा-त्तानि निराकार्षुः । तत्र (I) गृह्यसूत्रेषु ऋतुमती-त्वस्य कन्यादोषकोटौ अकथनं प्रथमं लिङ्गं (II) जैमिनि गृह्ये विवाह्यकन्यायाः अनग्निकात्व-विशेषणं द्वितीयम् (III) सर्वेषु गृह्येषु त्रिरात्रब्रह्मचर्यविधानं तृती-यम् (IV) बोधायनाऽऽपस्तम्बादिगृह्येषु चतुर्थापररात्रे समावेशन-विधानं चतुर्थम् ॥

तत्र यत् प्राथमिकलिङ्गदूषणम् ।—क्वापि गृह्यसूत्रेषु विवाह्य-कन्यालक्षणकथनाऽवसरे ऋतुमतीत्वस्य दोष-कोटावनभिधानात् " अप्रतिषिद्धमनुमतम् " इति न्यायेन वक्ष्यमाणैश्च हेतुभिः ऋतुमत्येव कन्या विवाहमर्हति इत्यतुमतीविवाहकाराः मन्यन्ते ॥

गृह्येषु ऋतुमतीत्वं कन्यादोषकोटौ न पठ्यते

नैतद्युक्तं । (1) न तावदृतुमतीत्वस्य दोषकोटावकथनम् ऋतुमत्याः विवाहसाधकं भवेत् । बह्वीषु स्मृतिषु तन्निषेधस्य स्पष्टमुपलम्भात् (2) गृह्यसूत्रकारैरनुपादिष्टस्याऽपि यज्ञोपवीतधारणस्य स्मृत्यन्तरेष्वाचारे च सुप्रसिद्धतया प्राधान्येनोपादानदर्शनात् । (3) स्मृतिविहिताना अनुष्ठेयपदार्थानां क्रमकल्पमात्रोपदेशायप्रवृत्तानां गृह्यसूत्रकृतां विवाहयोग्यकालादिकथनस्य अविवक्षितत्वात् । (4) स्त्रीषु कादाचित्कस्य ऋतुमतीत्वस्य तदभावस्य वा लक्षणकोटावन्तर्भावयितुं अनर्हत्वाच्च । प्रथमनिर्दिष्टं लिंगं आभासमात्रमिति ॥

तन्नसिध्यति । अत्र गृह्यसूत्रेष्वनिषेधरूप प्रथमलिंगस्य आभासीकरणायोपन्यस्ता युक्तयः यदि " ऋतुमती न विवाह्या " इति स्मृतयो ब्रुयुः तर्ह्याभासीकुर्युरेवलिंगं । स्मृतयस्तु न तथाब्रुवन्ति इति प्रतिपादितमधस्तात् ॥

अथयत् द्वितीयं लिंगं दूषयति " जैमिनिः स्वगृह्ये विवाह्यां कन्यां अनग्निकापदेन विशिनष्टि । अनग्निकाच, "नग्निकाऽनागतार्तवा " इति अमरकोशात् नग्निकाभिन्ना ऋतुमत्येवभवति । तस्मात् ऋतुमत्येव कन्या विवाहार्हेति जैमिनेरभिप्रायइति ऋतुमतीविवाहकाराऽऽशयः ॥ तच्च सर्वथाप्यसंगतं मुनिवचनस्य मुनिवचना-

जैमिनि गृह्ये अनग्निका विवाह्या

न्तरेणैव अर्थकरणं न्याय्यं । वसिष्ठश्च मुनिः नग्निकापदं बालिकायां प्रयुङ्क्ते ।

यावन्नलज्जितांगानि कन्या पुरुषसन्निधौ ।
योन्यादीन्यवगूहेत तावद्भवति नग्निका ॥
यावच्चेलं न गृह्णाति यावत्क्रीडति पांसुषु ॥
यावद्दोषं न जानाति तावद्भवति नग्निका ॥ इति ।

किञ्चायं नग्निकाशब्दः नग्नशब्दप्रकृतिकः, नग्नशब्दश्च विवसनवाची, "नग्नोऽवासाद्दिगम्बरः" इत्यमरकोशात् । तस्मात् वस्त्रधारणयोग्येऽपि वयसि वसनविहीनैव मुख्या नग्निकाशब्दार्थः । वसिष्ठेन तु मुनिना लक्षणयैव बालिकायां प्रयुक्तः । "नग्निकाऽनागतार्तवा" इति अवदिकाऽमरसिंहवचनन्तु वैदिकमुनिवचनव्याख्यायां न प्रमाणतयाऽऽदरणीयं। तस्माज्जैमिनिः नग्निकाशब्दं अत्यन्तबालिकावाचकमभिप्रेत्य अनग्निकापदेन प्राप्तविवाहयोग्याऽष्टमवयसं कन्यामेव विवाहार्हामभिप्रैति । नर्तुमतीम्"॥ इति

स्यादिदं न्याय्यं यदि वसिष्ठवत् सर्वेऽपि स्मृतिकाराः बालिकामेव नग्निकाशब्दार्थे अभिप्रयन्ति, ते खलु भिन्नभिन्नमभिप्रयन्ति । यथा । माधववैद्यनाथीययोः ।

नग्निकाशब्दार्थविचारः

यमः । "अष्टमेतु भवेद्गौरी नवमे नग्निका भवेत् ।
दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता ॥"
इत्यत्र यमो नववर्षां कन्यां नग्निकामभिप्रैति ॥ बोधायनवसिष्ठौ ।
"दद्यात् गुणवते कन्यां नग्निकां ब्रह्मचारिणे ॥
अपि वा गुणहीनाय नोपरुंध्याद्रजस्वलाम् ॥
प्रयच्छेन्नग्निकां कन्यां ऋतुकालभयात्पिता ॥
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितर मृच्छति ॥
इत्यप्राप्तरजसमेव कन्यकां नग्निकापदेन व्यपदिशतः ॥

रजो दर्शनकालश्च एकादशं द्वादशं वा वयो मतभेदेन । यदाहतुः-यमसंवर्तौ,

"दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला" इति ।

आपस्तम्बश्च "प्राप्ते तु द्वादशे वर्षे रजः स्त्रीणां प्रवर्तते" इति । क्वचित्षोडशवर्षाऽपि कन्यानग्निकापदेन व्यपदिश्यते, यथा निर्णय-सिन्धौ महाभारतवचनम्—"त्रिंशद्वर्षष्षोडशाब्दां भार्यां विन्देत न-ग्निकां ।" इति ॥

शब्दकल्पद्रुमेऽपि नग्निकापदविवरणे पश्चतन्त्रादुद्धृतं वचनं दृश्यते । तच्च वचनं स्मार्तमिव प्रतीयते । यथा ।

"अव्यञ्जना भवेत्कन्या कुचहीना तु नग्निका ।
ऋतुमत्यान्तु तिष्ठन्त्यां स्वेच्छादानं तु दीयते ॥
तस्मादुद्वाहयेन्नग्नां मनुः स्वायंभुवोऽब्रवीत्" ॥ इति ।

यदेव वचनद्वयं पूर्वमुपन्यस्तं "यावन्न लज्जताङ्गानि" इति 'यावच्चैलं न गृह्णाति' इति च तदिदं वैद्यनाथीये वासिष्ठतया गृह्यते ॥ माधवीये तु प्रथमं वचनं "वायुपुराण", द्वितीयं "संग्रह" इति चोदाह्रियते ॥ इदमेव तु युक्तं । एतद्धि वचनद्वयं माधववैद्यनाथोभय-सम्प्रतिपन्नेन "प्रयच्छेन्नग्निकामि" त्यनेन वसिष्ठवचनेन विरुद्धाभि-प्रायकं दृश्यते । सर्वमिदं मुनिमतमभिप्रेत्यैव अमरसिंह आह—'गौरी तु नग्निकाऽनागतार्तवा' इति । वसनविहीन स्त्रीवाचकन्तु नग्निका-पदं अन्यत्र अमरसिंह एव अभिदधाति । "स्त्री नग्निका कोटवी स्यात्' इति ॥ इत्थंच अमरसिंहकोश वचनेन मुनिवचनपरामर्शाच्च विमृश्यमानोऽनग्निकाशब्दः ऋतुमतीमेव कन्यकां बोधयति। यदत्र श्रीनिवासाध्वरीन्द्राणां "यस्मिन्वयसि लज्जया वासः परिदधाति तद्वयस्काम्" इति अनग्निकापदव्याख्यानं उदाह्रियते वयोनि-

**णयकारैः**, तदपि कन्यायाः युवतिभावमेव गमयति, कुचाद्यवयव-निष्पत्तावेव हि लज्जापूर्वकवासःपरिधानं लोके दृश्यते । अन्यथा हि तत्रैव गृह्ये "ऊर्ध्वं त्रिरात्रात् सम्भवः" इत्यत्र "त्रिरात्रादूर्ध्वं सन्निहिते पुण्यदिने सम्भवः संयोगः स्यात्" इति सम्भवपदव्याख्यानमसङ्गतं स्यात् ॥ तस्मात् द्वितीयलिङ्गदूषणं अयुक्तमेव **वयो निर्णय**-कृतां । अस्थाने चामरस्मिह आक्रुश्यते ॥

त्रिरात्रब्रह्मचर्यविधानम्

यदप्यत्र तृतीयलिङ्गदूषणं — "यदपि तृतीयं लिङ्गमुपन्यस्तं सर्वेष्वपि गृह्यसूत्रेषु विवाहे दंपत्योः मधुमांसवर्जनं ब्रह्मचर्यं च त्रिरात्रमवश्य मनुष्ठेयं इति विधीयते।तत्र ब्रह्मचर्यविधानं विमृश्यमानं ऋतुमत्या एव स्त्रिया विवाहं प्रत्याययति। ब्रह्मचर्यं हि मैथुनाऽसमाचरणं" इत्यारभ्य 'हन्तैवम् असम्प्रदाय विद्भिः बालिशैः सच्छास्त्राणां 'अपार्थकरणेन सर्वो लोक आकुली क्रियते । तस्मात् गृह्यसूत्रेषु त्रि-'रात्र ब्रह्मचर्यविधानं विवाह्यायाः ऋतुमतीत्वे लिङ्गमिति असत्प्रलपि 'तमेतत्" इत्यन्तेन ग्रन्थेन । अस्य च ग्रन्थस्य अयमभिप्रायः ।

'गृह्यसूत्रेषु त्रिरात्रादि ब्रह्मचर्यविधानं नाऽवश्यं विवाह्यां कन्यां ऋतुमतीं गमयेत्।नहि कश्चिदतिकामी पुमान् स्वेन साकं एकशय्याशायिनीं बालिकामप्युपभोक्तुमारभेत, तन्माभूदिति। "स्मरणं,कीर्तनं, के-"लिः, प्रेक्षणं, गुह्यभाषणं, सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव-च" इत्युक्त मैथुनाङ्ग विशेष वर्जनार्थं च ॥ वध्वास्तु अयुवत्याः तत्प्रसक्त्यभावेऽपि ब्रह्मचर्यपदगम्य मधुमांसदन्तधावन, अञ्जन, अभ्यञ्जन, अनुलेपन, स्रग्धारण, वर्जनार्थमेव ॥ तस्मान्नेदं ब्रह्मचर्यविधानमवलम्ब्य दृष्टरजस एव कन्याया विवाह्यता गृह्यकृदभिप्राय इति साधनमुपपन्नं स्यात्" इति ॥

अत्रार्थे स्वपक्षसाधनपरपक्षनिराकरणक्षमाः युक्तयः परिहा-सोक्तयश्च भूयिष्ठमुदाहृताः॥स्यादिदमुचितं यदि विवाहचतुर्थदिनाऽपररात्रे समावेशनविधिः सर्वथा न सिध्येत् । स च अस्तीति परस्तात्साधयिष्यते ॥ इह तु प्रकृतं प्रासङ्गिकं च अवश्यवक्तव्यं किञ्चिदुच्यते

अत्र गृह्यकृतां विवाहे त्रिरात्रब्रह्मचर्यविधानं एकशय्याशायिन्या वध्वा वरो नरन्तु मारभेतेत्येव मर्थमित्यत्र काचिदुपपत्तिरुदाहृता वयोनिर्णयकारैः। "प्राकृतो हि कामान्धः निषेधशास्त्रमुल्लंघ्य अग'म्यास्वपि स्त्रीषु विक्रियमाणचित्तो यथाकाममेव चेष्टितुं प्रयतत इति 'प्रत्यक्षमेव लोकस्य । एवं स्थिते तथास्वभावः कश्चिदप्रौढामपि स्वा'धीनां पत्नीभूतां एकशय्याशायिनीं कामखेदनिवृत्तिकृते बलात्कथ'ञ्चिदुपभोक्तुं न यततेति कोऽहि विश्वासः। अत एव कामातुरस्याऽ'प्रौढायां कन्यकायां गमने दोषः स्मर्यते हेमाद्रौ।तथाहि मार्कण्डेयः।

'असंस्कृतां पुष्पहीनां कन्यकां योद्विजाधमः ।
'रन्तुमिच्छति पापात्मा नरकं याति दारुणं॥

'तथाऽऽदेवलः अप्रौढां कन्यकां विप्रो यभेत् कामातुरोऽन्वहं ॥
तस्यैव नरकेवासः कानीनस्यात्तदुद्भवः ॥ इति ।

'तस्य दोषस्य प्रायश्चित्तविधानमपि तत्रैव हेमाद्रौ स्फुटमुपदि'श्यते। भवद्रीत्यातुकर्मणः प्रसक्तेरभावेन अपुष्पवतीगमने दोषस्मरणं 'तस्य प्रायश्चित्तविधानं चोन्मत्तवचनमापद्येत" इति । --

अत्र अत्यन्तकामाविष्टस्य अपुष्पवत्यामपि कन्यकायां भोगः संभाव्यत इत्यत्र प्रमाणतया खलु वचनद्वयमुपन्यस्तं । तत्रतु तन्न प्रतीयते । प्रथमे खलु मार्कण्डेयवचने अविवाहितायां अपुष्पवत्यां भोगेच्छया प्रवृत्तिमात्रात् दोषः स्मर्यते 'रन्तु मिच्छति" इति । तेन तस्यां क्रियानिर्वृत्ति रशक्येत्यपि गम्यते ॥

द्वितीये तु वचने अप्रौढां कन्यकामुपभुञ्जानस्य कामातुरस्य नरकवासाऽऽपादकदुरिता पूर्वोत्पत्तिः. तस्यां कन्यायां जातस्य कानीनत्वं च स्मर्यते। अत्र कामुपभुज्यमानकन्याविशेषणतया श्रूयमाणस्य अप्रौढाशब्दस्य अपुष्पावयवा. अनूढेति वा,अर्थपरत्वमेव न्याय्यं,नाऽपुष्पवती वाचकत्वं।वयोनिर्णयमन्तरेण क्वापि प्रौढापदस्य पुष्पवत्यां प्रयोगाऽदर्शनात्। योगरूढ्या परिणीतायां प्रसिद्धस्य ऊढापदस्य प्रोपसर्गमात्रेण कोशाभियुक्त प्रयोगादिकं विना अर्थान्तरकल्पनस्य अन्याय्यत्वाच्च ॥ कथं चित्तदर्थसंपादनेऽपि " कानीनःस्यात् तदुद्भवः" इत्युत्तरार्धगतपुत्रोत्पत्ति संभावनाविरोधो दुष्परिहरः। न ह्यदृष्टपुष्पा कन्या पुत्रं सूतइति श्रुतदृष्टचरम ॥ तस्मादनेनैव वचनेन स्पष्टमवगम्यते पुष्पवत्यप्यविवाहिता कन्या भवतीति ॥

प्रौढाशब्दार्थविचारः

न च संजात पुष्पायां कन्याशब्दप्रयोगो विरुद्धः। विरोधाभावस्य श्रीमता माधवाचार्येण व्यवस्थापितत्वात्। यथा माधवीये।

कन्याशब्दार्थः

" ऋतुत्रयमुपास्यैव कन्या कुर्यात् स्वयंवरम ॥ इति।

ननु ऋतुमत्यां कन्याशब्दःकथं प्रयुक्तः। यतो यमेन "दशवर्षाभवेत्कन्या" इत्युक्तं। न च दशमे वर्षे ऋतुस्संभवति ॥ नायं दोषः गौर्यादिशब्दवत् कन्याशब्दस्यापि परिभाषितत्वात्। सा च परिभाषा फलकथनादावुपयुक्ता। तच्च पूर्वमेवोदाहृतं। कन्यां ददत् ब्रह्मलोकं इति॥ लोकप्रसिद्धस्तु कन्याशब्दो विवाहरहितस्त्रीमात्रमाचष्टे ॥ एवं च सति शास्त्रेषु बहवः कन्याशब्दा अनुगृहीता भवन्ति। तथा चाऽऽनुशासनिके अष्टावक्रोपाख्याने वृद्धस्त्रियां प्रयुक्तः ॥

माधवाचार्यः

कौमारं ब्रह्मचर्य मे कन्यैवास्मि न संशयः ॥ 20—22

शल्यपर्वण्यपि वृद्धस्त्रियां नारदेन प्रयुक्तः।

'असंस्कृतायाःकन्यायाः कुतोलोकास्तवानघ ॥ 52—20.
'उमामहेश्वरसंवादेऽपि—

'ऋतुस्नाता तु याशुद्धा साकन्येत्यभिधीयते ।" इति,

एवं माधवाचार्यैः निर्णीतेऽपि कन्याशब्दार्थे यत् वयोनिर्णयका राणां मनुस्मृतिविचाराऽवसरे पतंजलिकैयटवाक्योदाहरणेन कन्या-शब्दस्य अपुष्पवत्यामेव वृत्तिव्यवस्थापनं तत् संरंभातिशयमात्रकृतं ॥ तत्र हि तथाविधोऽर्थो न प्रतीयते । तत्रेयं भाष्यपङ्क्तिः ।

सू. "कन्यायाः कनीनच" 4-1-126 भा. "इदंविप्रतिषिद्धं ॥ कोविप्रतिषेधः॥ अपत्यमितिवर्तते। यदि च कन्या-

पतञ्जलिः. ऽनापत्यं, अथाऽपत्यं न कन्या, कन्याचापत्यंचेति-विप्रतिषिद्धं॥ कथं? कन्याशब्दोऽयं पुंसाभिसंबन्ध-पूर्वके संप्रयोगे निवर्तते । या चेदानीं प्रागभिसंबन्धात् पुंसा सह संप्रयोगंगच्छति तस्यां कन्याशब्दोवर्ततएव । कन्यायाः । कन्योक्ता-याः कन्याभिमतायाः सुदर्शनायाः यदपत्यं स कानीनः" इति ।

नाऽस्यभाष्यस्य अर्थो नविदितःस्यात् कस्यापि। तथापि किंचि-द्विलिख्यते । कन्यायाः अपत्यंकानीनइत्यत्र पूर्वपक्षीकन्यायाः पुंसं-प्रयोगेसति सद्यः कन्यात्वंनिवर्तते तदनन्तरमेव अपत्यंजायेत । न कन्यात्वदशायां । तस्मात्कन्याया अपत्यमिति विप्रतिषिद्धंस्यादित्या-शशंके॥ सिद्धान्तीतु शास्त्रीयविवाहपूर्वक एव संप्रयोगे कन्यात्वंनि-वर्तते । न कामकारिते पुंसंप्रयोगमात्रे । तस्मात् विवाहात् प्राक् पुं-सा संप्रयुक्ताऽपि कन्या न कन्यात्वं जहातीति समादधे ॥

अत्र कैयटमिश्राणां व्याख्या " यदीति । अक्षतयोनिःकन्या, साकथमपत्येन संबध्येतेतिभावः ॥

अभिसंबन्धपूर्वकइति, शास्त्रोक्तो विवाहः अभिसंबन्धः-तत्पूर्वके पुरुषसंयोगे कन्याशब्दो निवर्तते । यातु शास्त्रोक्तेन विवाहसंस्कारेण विना पुरुषं युनक्ति सा कन्यात्वं न जहाति। कन्योक्ताया इति । कन्यैवाऽसावुक्ता, तदेवव्याचष्टे, कन्याभिमतायाइति, कन्यैवाऽसावभिमता स्मृतिकाराणामित्यर्थः । सुदर्शनाया इति प्रकटदर्शनायाः अगुप्तत्वादित्यर्थः ॥

कैयटः

अन्येत्वाहुः, मुनिदेवतामाहात्म्यात् या पुंयोगेऽप्यक्षतयोनिर्भवति, यथा कुन्ती मन्त्राहूतदिनकरोत्पादितकर्णाख्यपुत्रापि पुनःकन्यैवाभूत् । तदपत्यं कानीनशब्दाभिधेयं इति ॥

"अत्र अक्षतयोनिः कन्या" इति व्याचक्षाणानां प्रदीपकाराणां अक्षतयोनिरित्यस्य पुंसंप्रयोगरहितेत्येवार्थो विवक्षितः ॥

अन्यथा सिद्धान्तभाष्यव्याख्यावसरे "यातु शास्त्रोक्तेन विवाहसंस्कारेण विना पुरुषं युनक्ति सा कन्यात्वं न जहाती" ति नावक्ष्यन्। ऋतुमत्यपि विवाहात् प्राक् कन्यात्वं न जहातीत्येव अवक्ष्यन । तस्मादस्पृष्टमैथुनैवाऽक्षतयोनिरिति प्रदर्शितं प्रागपि बहुव्याख्याऽभिप्रायप्रदर्शनेन ॥

अपिच "कन्याभिमताया" इति भाष्यपदं व्याचक्षाणाः कैयटाचार्याः "कन्यैवाऽभिमता स्मृतिकाराणामित्यर्थः" इति व्याचख्युः । ततश्च युवतिरयुवतिर्वा अकृतविवाहसंस्कारैव कन्याशब्दव्यवहार्येति स्मार्ती परिभाषेत्यपि गम्यते ।

यच्चापि "(सू - वयसि प्रथमे" 4-1-20)॥ इति तद्भाष्यतद्व्याख्योदाहरणेन कुमारी शब्दस्य युवत्यादिषु गौणः प्रयोग इति कथनं वयोनिर्णयकारैः तदपि न युक्तं ॥ कुमारी शब्दस्य हि कुमार शब्दः प्रकृतिः । प्रकृतेश्च अप्राप्तयौवने पुंसि शक्तिः ॥

कुमारी शब्दार्थः

ततः तादृश्यामेव कन्यायां कुमारी शब्दस्याऽपि मुख्यां वृत्ति-मुचितां मन्यमानाः कैयटाचार्याः युवत्यादिषु कुमारी शब्दप्रयोगं गौणमभिप्रयन्ति।कन्याशब्दे तु विवाहाभावः प्रवृत्तिनिमित्तं।तस्मात् बाला युवतिः वृद्धा वा या न विवाहिता सा कन्यैव । विवाहात्परं निवर्तत एव कन्यात्वमिति अयमर्थः सुष्ठु प्रतीयते भाष्य कैयटयोः ॥

एवं शब्दशास्त्र परिपाट्या वृत्तिभेदेऽपि कन्याकुमारीशब्दयोः स्मृत्यादिषु युवत्ययुवतिसाधारणं अविवाहितामात्रे प्रयोगमवलंब्यैव अमरसिंहः "कन्याकुमारी गौरी तु नग्निकाऽनागतार्तवा" इत्यप्राप्ताऽऽर्तवस्त्रीवाचकेभ्यः त्रिभ्यः गौर्यादिशब्देभ्यः कन्याकुमारी शब्दौ भिन्नार्थकावभिदधाति, गौरीतु इति गौरीपदेन्वन्तताकरणेन । इन्त इदमेव वाक्यं "कन्याकुमारी गौरी च नग्निकानागतार्तवा" इत्यन्यथोदाहृत्य प्रमाणीकुर्वन्ति अमरसिंहं वयो निर्णयकाराः । कन्याकुमारीशब्दयोरपि अनृतुमती वाचकतासंपादनाय । नायं पाठः क्वचिदुपलभ्यते वयोनिर्णयमन्तरा ॥

अमरसिंहः

यदपि मन्वादिभिः होमप्रकरणे नैव कन्या न युवतिः" इत्यादिभिः कन्यायुवत्योः भेदेन व्यपदेशः । तदपि विवाहिताऽविवाहिताऽभिप्रायेणेत्यलम् ॥ तस्मात् "असंस्कृतां पुष्पहीनाम्" इति मार्कण्डेयवचनेन "अप्रौढां कन्यकां विप्रः" इति देवलवचनेन च अनृतुमत्यामपि व्यवायसंभावनं हेमाद्र्यभिप्रायतया प्रसाध्य तादृशव्यवायनिराचिकीर्षयैव गृह्यकाराणां त्रिरात्रादिब्रह्मचर्यविधानमिति— व्यर्थमिहक्लिश्यन्ति वयो निर्णयकाराः ॥

किंच आश्वालायनगृह्यसूत्रं व्याचक्षाणो **गार्ग्यनारायणः** गृह्यसूत्रेषु त्रिरात्रब्रह्मचर्यविधानं व्यवायवर्जनार्थमेवेति मुक्तकण्ठं ब्रूते. यथा "यत्तु समानं तद्वक्ष्यामः" I 5-2 इत्येतत्सूत्रव्याख्यानावसाने "वैदेहेषु सद्य एव व्यवायो दृष्टः । गृह्ये तु 'ब्रह्मचारिणौ त्रिरा-

ब्रह्मचर्यविधानं व्यवायवर्जनार्थं

त्रमि'ति ब्रह्मचर्यं विहितम्" इति॥ अत्रत्यव्यवायपदस्य स्मरणकी र्तनादि गौणार्थकल्पनं न न्याय्यम् । वैदेहेषु सद्यो व्यवायो दृष्ट इ-त्यत्रविवाहे दंपत्योः स्मरणकीर्तनादिः दृष्ट इत्यर्थकल्पनं को वाभ्यु-पेयात् ॥ ततश्च गृह्यसूत्रेषु त्रिरात्रब्रह्मचर्यविधानं युवतिविवाहे प्रस-क्तव्यवायवर्जनार्थमित्येव युक्तं प्रतिपत्तुम् । अतएव "त्रिरात्रमुभ योरधश्शय्या ब्रह्मचर्यं क्षारलवणवर्जनंच" -.४.४. इति सूत्रं व्या-चक्षाणः सुदर्शनाचार्यः एतच्च "ब्रह्मचर्यं स्थालीपाकात्प्रागपि अध्व-'नि, "शर्म समावेशने जपेत्"। १.८.१० इत्युत्तरक्रमविधानात्। अ-'तएव अत्र सूत्रे शय्यैक्यात् दुर्वारमपि मैथुनं अतिप्रयत्नेन वर्जनीय-'मित्येवमर्थः तन्निषेधः" । इत्याह ॥

अत्र वयोनिर्णयोक्तरीत्या कन्यायामप्रसक्तस्य अनेकदृष्टदो-षहेतुभूतस्य व्यवायस्य स्मरणकीर्तनादि तदङ्गकदेशस्य वा वर्जनार्थं ब्रह्मचर्यविधानमिति कल्पने सुदर्शनाचार्योक्तं मैथुने दुर्वारत्वं अति-प्रयत्नवर्जनीयत्वं चेति विशेषणद्वयमनर्थकमेव स्यात्। तद्धि बालायां न [illegible]र्वारं । नातिप्रयत्नवर्ज्यं च । अत्र लोकज्ञाः प्रमाणं ॥

अपि च विवाहे खलु 'बन्धुशीललक्षण सम्पन्नः श्रुतवान-रोग'' इति वरसम्पत्। आ गृ - २० इति विद्यादिसम्पन्नमेव अधिकारिणं मन्यते गृह्यकारः । न मूर्खमपि । तस्य अनधिकारमपि स्पष्टमाह तत्रैव सुदर्शनाचार्यः । श्रुतवान् श्रुताध्ययनसम्पन्नः । अ-विदुषः चोदितकर्मानधिकारित्वात् धर्मार्थत्वाच्च विवाहस्य'' इति। ततश्च युक्ताऽयुक्त विवेकशून्यं मूर्खं प्रति ब्रह्मचर्यविधानमित्यपि न युक्तं । तस्मात् युवतिविवाहात् शय्यैक्याच्च प्रसक्तं व्यवायं प्रतिषे-द्धुमेव त्रिरात्रब्रह्मचर्यविधानमित्येव युक्तं ॥

यच्च "त्रिरात्र ब्रह्मचर्यविधानं चतुर्थदिने स्त्रीगमनमपि न बो-धयेत् । वाक्यभेदाऽऽपत्तेः" इति । तद्युक्तमेव ॥

यदपि "त्रिरात्रव्रतस्य पुत्रफलकत्वात् तत्र दृष्टद्वारतया चतुर्थ्यां रात्र्यां उपगमनमपि कर्तव्यमेवेति न युक्तं,

दृष्टाऽदृष्टद्वारत्वम् शास्त्रार्थानुष्ठानस्य दृष्टद्वारमन्तरापि फलदानशक्तेः ज्योतिष्टोमादिष्वभ्युपगतत्वात् "।इति ॥ तच्चाभ्युपगन्तव्यमेव उदाहृतहेतोः।विवाहश्चेदन्तो स्यात्।कन्याभ्युपगमनस्य द्वारत्वासम्भवाच्च॥ किन्त्वत्र बोधायनः ऋतुमती विवाहानुकूलो दृश्यत इव। एवं किल बोधायनः सूत्रयामास,विवाहकल्पोपदेशप्रकरणे॥"अथ यदि कामयेत श्रोत्रियं जनयेयमिति आऽरुन्धत्युपस्थानात् कृत्वा त्रिरात्रमक्षार लवणाशिनो अधःशायिनो ब्रह्मचारिणावासाते ॥ बो॰ I-7 0। अहतानां च वाससां परिधानं सायंप्रातश्चालङ्करणं इषुप्रतोदयोश्च धारणं उभौ कालावग्नि परिचर्या च चतुर्थ्यां पक्वहोम उपसंवेशनं च" इति । एवं अनूचान ऋषिकल्प, भ्रूण, ऋषि, देव, संज्ञकपुत्रकामानां, द्वादशरात्र,मास, चतुर्मास,षण्मास,संवत्सरकालावधिकं ब्रह्मचर्य मुपदिश्यते । सर्वत्र "व्रतान्ते पक्वहोम उपसंवेशनं च" इति पृथक् स्मर्यतेच॥ ततश्च यद्विना पुत्रोत्पत्तिफलकत्रिरात्रब्रह्मचर्यादिव्रतानि न फलोत्पादनाय प्रभवन्ति, तदेव दृष्टद्वारभूतमुपसंवेशनं व्रतान्ते विधीयते । तदपि कथमदृष्टफलकं स्यात् । दृष्टे सम्भवत्य दृष्टकल्पनमन्याय्यमिति हि न्यायविदो मन्यन्ते । तस्मात् इह विधीयमानमुपसंवेशनं गुणवत्पुत्रफलोत्पत्तिं प्रति दृष्टद्वारमेवेति युक्तं प्रतिपत्तुम् । संस्काररूपफलोत्पत्तिं प्रति तु मा भूत् दृष्टद्वारम् ॥ नचेदं काम्यव्रतमात्रे न नित्ये इति शङ्क्यं । नित्यप्रकरणीभूतसमनन्तरपूर्वाध्यायोपदिष्टकल्पानां ब्रह्मचर्यादि पदार्थानामेवेहाऽतिदेशात् ॥

अत्र उपसंवेशनं नाम सहशयनमात्रं. न व्यवाय इत्यपि न शङ्क्यं । पञ्चमाध्याये चतुर्थ्यां दण्डोत्थापनं वधूवरयोरन्योन्यं मन्त्रवत् तद्दण्डदानं प्रतिग्रहश्च विधाय अनन्तरमिदं पठयते वरोद्देशेन "अथैनं स्थूणादेशे निधाय अन्तिकेन प्रतिपद्यते। (15-67) प्रसिद्धमुपसंवेशनं" (68) इति ॥ अत्र स्पष्टमेव किल मुनिः प्रत्याययति बोधायनः । किमितोऽप्यधिकमुपदेष्टव्यं सूनोः । अमुमेव लोकप्रसिद्धं रागप्राप्तमपि नियतमुपसंवेशनमनूद्य मन्त्रमात्रं विधीयते षष्ठाध्याये "अथैना मुपसंवेशयति प्रजापति स्त्रियां यश इत्येनया" (1-24) । तत्रैव अर्थसिद्धं स्तोकोनिविवरणमनूद्य कश्चिन्मन्त्रो विधीयते,"अथास्याः स्तोकानि विवृणोति नजायत्वंनि"॥ (25) यदत्र समनन्तरसूत्रे 'सायद्यश्रुकुर्यात् तामनुमन्त्रयते" (26) इत्यश्रुकरणं बालिकात्वलिङ्गमिति । तन्न । तत्प्रथमप्रवृत्तौ लज्जातिशयादिना कासाञ्चिदश्रुकरणसम्भवाभिप्रायत्वात् ॥ अत एव अत्र "सा यद्यश्रुकुर्यादि"ति यदिशब्दः श्रूयते । अन्यथा बालिकायास्तस्या नियमेन किल अश्रुपातसम्भावनया यदि शब्दो न निबद्धः स्यात् मुनिना । एतेन बोधायन गृह्यविचारे वयोनिर्णयकाराणां उपसंवेशनार्थखण्डनमपि परास्तं वेदितव्यं। इह तु प्रसङ्गादिदमुक्तं ।

उपसंवेशनशब्दार्थः

यत्पुनरत्र"युवतिविवाहपक्ष एव ब्रह्मचर्यविधौ उभयग्रहणवैयर्थ्यं दुष्परिहरं.अन्यतरमात्रस्य विधानेऽपि इतरस्याप्यर्थसिद्धमेव खलु ब्रह्मचर्यं भवति । ततश्चोभयग्रहणसार्थक्यसंपादनाय अन्यतरस्य व्यभिचारः संभावनीयः । सति चैवं उभयोद्देश्यकब्रह्मचर्यविधिबलाक्षिप्तो व्यभिचारोऽपि शास्त्रीय एव स्यात युवतिविवाहवादिनः" इत्येवमर्थकं वाक्यजातमुदाह्रियते ॥ तन्न। अत्र बालिकाविवाहपक्षोक्तानि क्षारलवणमधुमांसवर्जनादीनि उभयपदोपादानप्रयोजनानि

ऋतुमतीविवाहवादेऽपिर्कितस्युः ॥ किं च अस्त्यन्यदपि प्रयोजनं युवतिविवाहपक्ष उभयग्रहणस्य । यदि विवाहमध्य एव ऋतुकालात्ययः संपद्येत तदा तत्रभार्याभिगमनं वैधतया किल प्राप्नोति । यथाऽऽहयाज्ञवल्क्यः ।

> षोडशर्तुर्निशास्त्रीणां तस्मिन् युग्मासु संविशेत् ।
> ब्रह्मचार्येव पर्वाण्या द्याश्चतस्रश्च वर्जयेत् ॥ (I-79)

अत्र विज्ञानेश्वरव्याख्यायावदर्थं लिख्यते "एवं गच्छन् ब्रह्मचार्येव भवति।अतो यत्र ब्रह्मचर्यं श्राद्धादौ चोदितं तत्र गच्छतोऽपि न ब्रह्मचर्यस्खलनदोषो ऽस्ति" इति । अतो यत्र श्राद्धादौ पुंमात्रोद्देशन ब्रह्मचर्यं विधीयते तत्र प्रतिप्रसवबलात् प्राप्नोत्येवाभिगमनं । तन्माभूदित्युभयोद्देशेन ब्रह्मचर्यविधानं । अपिच अनृतुकालेऽपि भार्यानुरोधात् उपगमनमवश्यकर्तव्यतया विधीयते । यथाह मनुः ॥

> ऋतुकालाभिगामी स्यात् स्वदारनिरतस्सदा ।
> पर्ववर्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया॥ (III-45)

(व्या) तद्व्रतः, भार्याप्रीतिः व्रतं यस्य इति ।
(याज्ञवल्क्यश्च)

> यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।
> स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः॥ III-131.

अत्र मिताक्षरा, "स्त्रीणां वरमिन्द्रदत्तमनुस्मरन् भवतीनां-कामविहन्ता पातकी स्यादिति"।अतश्चयोषिदभ्यर्थनानुरोधात् वैधमिति शंकयापि त्रिरात्रमध्येऽपि स्यादभिगमनं।तन्माभूदित्यपि उभयोद्देशेन ब्रह्मचर्यविधानं संगतमेवस्यात् । तस्मात् ऋतुमतीविवाहपक्ष एवोभयोद्देश्यक ब्रह्मचर्यविधानं अतितरां संगच्छते । नैवमन्यत्राऽयुवतीविवाहेऽपीत्यलं ॥

यदपि गृह्यसूत्रेषु चतुर्थीपररात्रसमावेशनविधिः विवाह्यां कन्यां ऋतुमतीं गमयतीति चतुर्थं लिंगमुपन्यस्य-

चतुर्थीपररात्र- समावेशनं

निराक्रियते॥ ' सर्वेष्वपि गृह्यसूत्रेषु विवाहकर्मणि समावेशनविधिर्नास्ति यच्च कचिदापस्तंबादि गृह्येषु विवाहकर्मांगतया समावेशनमुपदिश्यते इत्युच्यते । तदप्यसिद्धं, तत्र कालान्तरभाव्यृतुसमावेशनमेव हि विधीयमानमन्त्रजपाश्रयतयाऽनूद्यते । न पृथक्समावेशनं'' इत्यभिप्रायकमापस्तंबसूत्रादिक्रमेण समावेशन निराकरणं ॥

तदपि हि न सिध्यति विमृश्यमानेषु सूत्रेषु व्याख्यादिषु च तदनुसारिषु ॥ आपस्तंबोहि '' तं चतुर्थ्यापररात्र उत्तराभ्यामुत्थाप्य—शेषं समावेशनेजपेत्'' VIII-1 इत्येकेनैव सूत्रेण चतुर्थीपररात्रकर्तव्यान् विवाहशेषभूतान् दंडोत्थापन, तत्प्रक्षालन, निधान अग्न्युपसमाधानादि जयादिपर्यन्तहोम, वधूशिरसिमन्त्रवदाज्यानयन, मन्त्रवदन्योन्यसमीक्षण, हुतशेषाज्यकरणकमन्त्रवद्धृदयदेशसंमार्जन, प्रजापतेतन्वं म इत्यादि ऋक्त्रयजप, समावेशनाश्रितावशिष्टानुवाकजप, रूपान् क्रियाविशेषान् एककालकर्तव्यानेव विधत्ते । अत्र अन्तिममात्रस्य कालान्तरानुष्ठाने न खलु विज्ञायते प्रमाणं ॥

ननूच्यते समावेशनरूपाश्रयानुवाद एवेति ॥ तन्न । अत्र चतुर्थीपपररात्रकर्तव्यं रागप्राप्तत्वादविधेयं । ऋतु-

समावेशनर्तु समावेशने

समावेशनशब्दितात् क्रियान्तरात् भिन्नं समावेशनमेव खलु आश्रयतयाऽभिप्रेयते मन्त्रजपस्य, नर्तुसमावेशनं । तच्चेदत्राभिप्रैष्यत तदातच्छब्देनैवात्राप्यवक्ष्यत ॥

मित्यादि, समावेशनकालेजपेत् - समावेशनन्त्वास्मिन्नेवाऽपररात्रे नियमेन भवति ॥ इदमेव समावेशनं मन्त्रवन्नान्यत्, इति ॥ एतत् व्याख्यात्रभिप्रायेण युवतिरेव विवाह्या नाऽयुवतिरपीति स्पष्टम् । चतुर्थीसमावेशने नियमाभिधानात् ॥ अयं हि हरदत्ताचार्यः प्रतनतमः सुदर्शनाचार्यात् । यतोऽस्य अभिप्रायः सुदर्शनाचार्येण स्वव्याख्यायां क्वचिदनूद्यते, क्वचिन्निरस्यते च अयमेव हरदत्तः आपस्तंबसामान्यसूत्र, धर्मसूत्रं गौतमधर्मसूत्रं, एकाग्निकांडमन्त्रांश्च व्याचख्याविति तत्र नामकथनात्प्रतीयते । एतद्व्याख्यायामेव उज्वला मिताक्षरादिकायां परममादरंवहन्ति आस्माकीनाः ॥ अयं द्राविड इत्यवगम्यते । यतोऽय गौतम धर्मसूत्रव्याख्यायां उपनयन प्रकरणे "मौञ्जी ज्यामौर्वीसौत्र्यो मेखलाः क्रमेण" (1-15) इत्येतत्सूत्र व्याचक्षाणो विस्पष्टतार्थं द्राविडभाषा पदं प्रयुङ्क्ते । यथा, मौर्वी आरण्यौषधिविशेषः यस्य अरत्निमात्राणि द्व्यगुलविस्ताराणि पत्राणि (मरलिति) द्राविडभाषया प्रसिद्धिः । एवमन्यत्रापि, किलासपदं, तमलिति द्राविडभाषया व्यनक्ति । अयं पञ्चाशदधिकसहस्र संवत्सरेभ्यः प्राक् चोलेषु कंसपुराख्ये ग्रामेऽवात्सीदित्युपाख्यायते । नूनमस्य समये युवतय एव विवाह्यमाना आसन्निति अनाकुलाख्या गृह्यव्याख्या ज्ञापयति ॥

आण्डपिळ्ळै

अन्यच्च तालवृन्तनिवासी आण्ड पिल्लयार् नामकाचार्यविरचिता आपस्तम्बगृह्यसूत्रप्रयोगवृत्तिर्नाम ग्रन्थोऽतिप्रसिद्ध एव द्रविडेषु । तत्रापि हि भेदेन प्रतीयते समावेशन मृतुसमावेशनं च ॥ "प्रजापते तन्वम्म इति तिस्रो जपित्वा आरोहोरुमित्यनुवाकशेष समावेशनकाले जपेत् । ऋतुमधिगम्य स्नातायां समावेशनकाले विष्णुर्योनिमित्यारभ्य, तम्मेवायो सम्भृष्यतां, इत्यन्तेन वधूमभिमन्त्र

यते । यदि चतुर्थीसमावेशन मृतुसमावेशनं च युगपत्प्राप्नुतः तदा आरोहोरुमिति जपित्वा विष्णुर्योनिमिति वधूमभिमन्त्रयेत" । इति । अत्र हि विवाहाङ्गसमावेशन मन्यत् , ऋतु समावेशन मन्यत् । तयोः कदाचिदेव युगपत् प्राप्तिरिति विस्पष्टं अववगम्यते ॥

एवं सर्वव्याख्यातृभिप्रायेणापि सिध्यत्येव चतुर्थी समावेशनं। तच्च हरदत्ताऽऽण्डपिल्लयोर्मते नियतं। सुदर्शनस्यैच्छिकं। ॥ एवंस्थिते सुदर्शनाचार्येण इदानीमप्रसिद्ध समावेशनशब्दस्य अर्थनिर्णयायादाहृतं ' ऋतुलिङ्गात् ' इति पदमवलम्ब्य वयोनिर्णयकाराणां चतुर्थी समावेशनस्य अत्यन्ताभावसाधनं नितरां न युज्यते॥॥ एवमापस्तंबगृह्यटीकादिपरामर्शेन प्रसिध्यत्यपि चतुर्थीसमावेशने, तदसिद्धिप्रतिज्ञापूर्वकं यदिदंकालान्तरभाव्यृतुसमावेशनाश्रितस्य विवाहांगभूतस्य आरोहोरुमित्यादिमन्त्रजपस्य कदाचिदाश्रयलोपात् लोपोऽपि न दोषायेति, तत्र भोजनलोपात्तदाश्रित प्राणाग्निहोत्रलोपस्य भोजनपर्यायव्रताश्रितपय आदिलोपस्य च शास्त्रप्रसिद्धस्य दृष्टान्तीकरणं । ॥ यच्च विवाहकर्मांगस्यापि मन्त्रजपस्य स्वतन्त्रान्यकर्मणि अनुष्ठानसमर्थनाय प्रायश्चित्तार्थाऽऽचमनाऽनुकूलासु अप्सु प्राणवासोबुद्धिविधानादि न्यायप्रदर्शन सर्वमिदमनालंबं ॥ ॥ यदपि विवाहकर्मांगस्य आरोहोरुमित्यादि मन्त्रजपस्य कालान्तरभाविनि ऋतुसमावेशने अनुष्ठानं , शरदनुष्ठितवाजपेयांगभूतस्य बृहस्पतिसवस्य वसन्तकालानुष्ठानवदविरुद्धमिति, तच्च सुदर्शनव्याख्या विरुद्धमेव - तत्र चतुर्थी समावेशनाभावे जपलोपस्य कण्ठतः प्रतिपादनात्। 'लुप्यतामित्यपि. न युक्तम्' विवाहकर्मणि अङ्गवैकल्यदोषस्य दुर्वारत्वात् । तत एवेदानींतनाः शिष्टाः चतुर्थ्यामेव सर्वावसाने मन्त्रजपमात्रमप्याचरन्ति । (॰) यदिह आपस्तम्बस्समावेशनं न विदधाति किन्तु क्रमजपावेवात्र विधिविषयः । इति ॥ तत्सत्यं, समावेशन-

शब्दितस्य व्यवायस्य न क्वचिद्विधिरङ्गीक्रियते चिरन्तनैः विज्ञानेश्वरादिभिराचार्यैः ॥

रागप्राप्तत्वात्, ऋतुगमनादावपि नियममेवाभ्युपगच्छन्ति। एव मिहापि नैत्यकजपाश्रयतानुवादेन नियममेव अभिदधति हरदत्ताचार्य इति निरूपितमधस्तात्। सुदर्शनाचार्य श्चाऽमुंपक्षमनुवदति क्वचिदित्यादिना. नहिनिराचष्टे। स्वमतेन विकल्पाभिधानन्तु बालिकाविवाहपक्षे तत्र रागानुदयात् तस्य असम्भवमभिप्रेत्यैव. तत्रैव समावेशनान्तरे जपनिषेधात्। संस्कारकर्मणि वैकल्यं मा भूदिति । अपत्तात्रमिदानीमाचरन्ति बालिकाविवाहेषु । पक्षान्तरन्तु युक्तं नियममेव यु वतिविवाहेषु. तत्ररागोऽपि सम्भवति. समावेशनं चनियमेन। एतेन " आपस्तम्बगृह्ये समावेशनविधिर्नास्ति । अस्तीति तु अधुनातना नां भ्रान्तिमात्र.रागाभावेऽपि व्यवायः क्रियत इति विप्रतिपन्नं" इत्यादिबहूक्तिः प्रत्युक्तावेदितव्या ॥ यच्चान्यदुच्यते. "चतुर्थी समावेशनाङ्गीकारेऽपि समावेशनपदं व्यवायार्थकं न सिध्यति । तत्तु सहशयनमात्रवाचि यदि व्यवायोऽत्राभिप्रेतोऽभविष्यत् किमित्यापस्तम्बो मुक्तकण्ठं नाऽवक्ष्यत्। न तावन्मुनयो नागरिकाः सुतरां न ग्राम्याः । अदृष्टैकप्रयोजनेषु विधिनिषेधशास्त्रेषु जुगुप्सितस्यापि अर्थस्य सम्यक् कथनमेव हि न्याय्यं । किंतु बोधायनो जुगुप्सितमपि योनिविवरणं न कथयति" इत्यादि॥ अत्रोच्यते। न तावन्मुनयो नाग रिकाः सुप्रसिद्धं खलु आरण्यका मुनय इति । तथापि स्वभावेन तेषां शैलीदृश्यते यदग्राम्यै रेवशब्दैरिममर्थं विदधतीति । 'ऋतुकालाभिगामीस्यात् " इति मनुः, "तस्मिन् युग्मासुसंविशेत् " इतियाज्ञवल्क्यः "अथैनामुपेयात्" इतिगौतमः "अथैनामुपसंवेशयति" "अथैनामुपैति" इतिचबोधायनः,"ऊर्ध्वं त्रिरात्रात्सम्भवः "इति जैमिनिः"ऊर्ध्वमर्धरात्रात्संवेशनमिति,अथैनामुपयच्छते"इतिच हिरण्य-

केशी, "मिथुनमुपेयाता"मितिकात्यायनः, "प्रवेशन"मितिपारस्करः, एवमिहापि आपस्तम्बेन "समावेशनमित्युच्यते"॥यत्वत्र बोधायनेन स्तोकेनिविवरणं जुगुप्सितमभिधीयत इति तन्न ॥ अप्रसिद्धतया अजुगुप्सितेन स्तोकेतिपदेनैव अवश्यकर्तव्यसंस्कारविधानात् —तस्मात् सर्वमुनिसम्प्रदायादग्राम्यमुदितस्य समावेशनपदस्य तत्सजातीयानां गृह्यान्तरोदितानां सम्भवादिपदानां च तत्तद्गृह्यव्याख्यातृभ्युपेत [illegible] शयनमात्रवाचकतासम्पादने परिकरबन्धो न समुचित इति, वयोनिर्णयकृतां॥

[illegible] यच्च "समावेशने जप्यतया विहितस्य आरोहोरुमित्यस्य मन्त्रस्य अर्थपर्यालोचनेन तस्य व्यवायार्थत्वकल्पनमसारं । [illegible] हि [illegible] विनियोगो जपकर्मणि, न व्यवाये. मन्त्राणां विनियोगानुसारेण अर्थप्रकाशकत्वसम्पादनं न्याय्यं । कथञ्चित् व्यवायार्थत्वाभ्युपगमेऽपि "अन्यो च नामाभिमन्त्रयेत" इति पक्षान्तरेण [illegible] ब्राह्मणकर्तृके अभिमन्त्रणे तस्मै नोनाय भार्यासमर्पणापत्तिः । अहं गर्भमदधामिति मन्त्रलिङ्गात् । अभिमन्त्रयितृकर्तृ [illegible] मायाादि "ति ॥ अत्र प्रत्युच्यते । जप्यतया [illegible] मन्त्रस्य स्वनिमित्ताश्रयाद्यर्थप्रकाशकत्वमपि अभ्युपगन्तव्यम् [illegible], यथा "क्षीरिणा मन्येपां वा लक्षण्यानां वृक्षाणां [illegible] च व्यतिक्रम उत्तरं यथा लिङ्गं जपति" (6- -) इत्यत्र [illegible] निमित्त को मन्त्रो जप्य इत्यत्र मन्त्रार्थस्यैव हि ज्ञापकता मनुशास्ति मुनिरापस्तम्बः ॥ अत एव. "तीर्थस्थाणु चतुष्पथ व्यतिक्रमे चोत्तरां जपेत्" (5- 6) इति सूत्रं व्याचक्षाणः सुदर्शनाचार्यः तीर्थाद्यन्यतमव्यतिक्रमे मन्त्रगतान्यवाचकपदवैयर्थ्यात् त्यागमाशङ्क्य तत्पदानामपि प्रकृतार्थपरतासम्पादनेन कृत्स्नस्यैव मन्त्रस्य जपं निरधारयत्॥ तथा प्रकृतान् आरोहोरुमित्यादिकान्

मन्त्रान् व्याचक्षाणो हरदत्ताचार्यः । अथ समावेशने जपः "अन्यो वैनावभिमन्त्रयेत" आरोहोरुमिति. जपपक्षे तावदात्मन एवाऽयम न्तरात्मनः प्रेपः हे मदीय शरीरान्तरात्मन् अस्याः – ऊरुमारोह इत्यादि व्याख्याय अन्ते अभिमन्त्रणपक्षे तस्यामित्यन्तं पत्युरभिमन्त्रणं शिष्टं द्वयोः" इति व्याचख्यौ॥अत्र जपस्य केवलाऽदृष्टमात्रार्थतायां कुतोऽयं अन्तरात्मपरतयापि अर्थसम्पादनक्लेशप्रसङ्गः । तस्मात् जपपक्षे अर्थतो विचार्यमाणाः मन्त्राः सूत्रोक्तसमावेशनपदार्थो व्यत्राय इति स्पष्टं गमयन्त्येव ॥ अभिमन्त्रणपक्षे तु मन्त्राणां करणत्वात् प्रयोगसमवेतार्थस्मारकत्व मभ्युपगन्तव्यमेव सर्वैः। अत्र "अन्यो वैना मभिमन्त्रयेत"इति सूत्रं "व्यक्तार्थं"इति"व्याचख्यौ सुदर्शनाचार्यः हरदत्तस्तु, "ब्राह्मणः एतौ जायापती समागमिष्यन्तौ अनुवाकशेषेण अभिमन्त्रयेत" इति स्पष्टं व्याचख्यौ । मन्त्रविवरणेऽपि "अभिमन्त्रण पक्षे 'तस्यामित्यन्तं पत्युरभिमन्त्रणं शिष्टं द्वयोः" इति लिङ्गानुसारात् विनियोगः कृतः ॥ "अहं गर्भमदधामि "त्यत्रापि, "तदेतज्जपपक्षे यथा श्रुतमेव, अभिमन्त्रणपक्षे तु प्रयुक्तिद्वारेण, प्रयुक्तिश्चाभिमन्त्रणमेव इति लिङ्गविरोधं परिजहार ॥ सुदर्शनाचार्यश्च "अन्यो वा" इति सूत्रव्याख्यायाम् । इदञ्च अहं गर्भमदधामि "त्यादि लिङ्गविरोधेऽपि श्रुतेर्बलीयस्त्वात्" इति अस्यापि विनियोगानुसारात् मन्त्रार्थसपादनमभिप्रैति ॥ एवं विनियोगादेव समावेशनाङ्गतया ज्ञायमाना मन्त्राः अर्थतो विमृश्यमानाः ऊध्नोरोमशत्वादिलिङ्गैः विवाह्यायाः युवतिभावं ज्ञापयन्तीति वदन्तं प्रति "अहं गर्भमदधामिति लिङ्गात् अन्यस्मै भोगाय भार्यासमर्पणमपि शास्त्रीयतया अभ्युपगन्तव्यमिति इयमत्युक्तिरसङ्गतेव । युवतिभावं खलु अन्यथानुपपद्यमानः चतुर्थदिनसमावेशनविधिराक्षिपति – एवमन्यभोगार्थभार्यासमर्पणाक्षेपको विधिः नोपलभ्यते । एतेन "सोमः प्रथम" इत्याद्याशीरर्थकमन्त्रपर्यालोचनेन सपुत्राया

एव कन्यायाः विवाहश्शास्त्रीय इति तार्किकदर्दुरोक्तयः प्रत्युक्ता वेदितव्याः । यद्येत्र मातृक्तयः स्मृत्यादिनिरपेक्षं लिङ्गमेव सर्वान् विध्यर्थान् साधयाम इति वदन्तं प्रति स्युः, सन्तु कामम् । नात्र पूर्वत्र स्थकृदेवं वादी दृश्यते ॥

[illegible] यच्चाप्युच्यते' वस्तु नन्तु आपस्तम्बगृह्यपरामर्शो ऋतोः प्रागेव स्त्रीणां विवाह इति स्पष्टं निश्चयकारणमस्ति इत्यादिना गृह्यसूत्रेषु कन्यालक्षणकोटौ युवतिभावो न परिगणितः प्रत्युतायतां पाठात्॥ सू [illegible] ऋतु स्नातात्वं [illegible] विधाने ऋतुस्नातेति व्याख्याविरोधि चतुर्थीसमावेशनं च [illegible]मित्युन्मूलितं प्राक्. तस्मादृतुमती कन्यका सर्वथा विवाहे वर्जनीयेति सुष्ठु आपस्तम्बस्य मतमत्र निर्णीयते' इति [illegible] स्त्रीषु कादाचित्कमार्तवं गुणकोटौ दोषकोटौ वा [illegible] शक्यं. तस्य दोषतया गुणतया वा अकथनं [illegible] नत्र-स्याः परिग्रहे परित्यागे वा हेतुर्नस्यादिति [illegible] निर्णयकारैरेव गृह्यविचारारम्भे निर्णीतं । इह तु [illegible] गुणकोटौ न कीर्त्यते चेति । [illegible] विरोधि चतुर्थी [illegible] च प्रतिरोपितमेवाध्यात् जागर्ति । तस्मात्सुदर्शनाचार्यस्य ऋतुस्नातात्वा इति द्वितीयं व्याख्यानमन्याभिप्रायकमित्येव युक्तं । तद्यथा वरयितृब्राह्मणेषु वरणार्थं गृहमागच्छत्सु या तदानीं ऋतुस्नाता भवति सा न वरयितव्येत्यभिप्रायस्यात् । ऋतुस्नाता शब्दश्च चतुर्थ्याद्यपोडशादिनात्मककालविशेषावच्छिन्नायामेव स्त्रियां युज्यमानो दृश्यते "ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति" इत्यादौ न युवति मात्रेऽस्य क्वचित्प्रयोगः उपलभ्यते किञ्च अत्र ऋतुमती सर्वथा न विवाह्या भवतीत्यर्थकरणे वर्षकारिपदव्याख्याविरोधो दुष्परिहरः - तत्रैव हि- ''दत्तां गुप्तां' इत्यादिके सूत्रे चरमं वर्षकारिं इति पदं - वराद्वर्षेणाधिका याऽऽयस्त स्रवति सा वा इतिव्याचख्यौ सुदर्शनाचार्यः-

अत्यन्त स्त्रावश्चदृष्टरजस एव कन्यायाः धातुक्षोभवशात्संभवति, यदि ऋतुमत्येव सर्वथा न विवाहमर्हतीत्यभिप्रायम्याज्ञ्याख्यातुः कथमत्यन्तस्त्रावयुक्ता न विवाह्येति व्याख्यासङ्कुचेत । तस्मादेतद्व्याख्यावष्टम्भेन, ऋतुमती कन्या, विवाहे प्रतिषिध्यते, इत्ययमर्थः सर्वथा न सिध्यति ।

(IX) यदप्यन्यदुच्यते । "अपिच, इत्यादिना भगवानापस्तम्बो हि विवाहकल्पोपदेशानन्तरं " यदा मलवद्वासा स्यादथैनां ब्राह्मणप्रतिषिद्धानि कर्माणि संशास्ति — यां मलवद्वाससमित्येतानि" (3-8-6) इति विवाह समनन्तर रजोदर्शनकाले नैत्तरीयश्रुत्याम्नातं रजस्वलानुष्ठेयं व्रतविशेषं पत्युपदेश्यं विदधाति । विवाहश्चेदृत्वनन्तरमभिप्रेतः स्यात्, मुनेरिदमनुशासनविधान व्यर्थमेव स्यात् । प्राथमिक एव रजोदर्शने व्रतावश्यंभावात् । विवाहात प्राचीना रजःकालाः, धर्महीना, इति तु शास्त्रविरुद्धं । पतिकर्तव्य मनुशासनं तदा विवाहे [illegible] क्रियत इत्यपि न युक्तं । अनधिकारात्, तस्माद्-नृतुमतीविवाह एव मुन्यभिमत " इति ॥ अत्रोच्यते । आपस्तम्ब मुनिना विधीयमानं व्रतानुशासनं प्राथमिक एव रजोदर्शन इत्यत्र न प्रमाणं दृश्यते । प्रत्युत प्रथमर्तौ व्रता भावः । द्वितीयादौ तत्सत्त्वं च प्रतिपाद्यते निर्णयसिन्धुकारेण । यथा, " प्रथमर्तौ विशेषः स्मृति चन्द्रिकायां ॥

> प्रथमर्तौ तु पुष्पिण्याः पतिपुत्रवती स्त्रियः ।
> अभ्यन्तरासनं कृत्वा तस्मिंस्तां सुपवेशयेत् ॥
> हरिद्रा गन्धपुष्पादीन् दद्यात्ताम्बूलकं स्रजं ।
> दीपैर्नीराजनं कुर्यात् सदीपे वासयेत् गृहे ॥
> लवणापूपमुद्गादि दद्युस्ताभ्यस्स्वशक्तितः" ।

इति, "द्वितीयादृतुषु तन्नियमानाह मदनपारिजाते—दक्षः—

अञ्जनाभ्यञ्जने स्नानं प्रवासं दन्तधावनं ।
न कुर्यात्सार्तवा नारी ग्रहाणा मीक्षणं तथा ॥" अत्रिरपि,
वर्जयन्मधुमांसं च पात्रेऽखर्वेच भोजनं ।

गन्धमाल्यं दिवा स्वापं ताम्बूलं चाऽऽस्यशोधनं॥" इत्यादिभिः॥
एवमिहापि देशे प्रथमर्तौ कुलधर्मानुसारतः मङ्गलाचरणमेव दृश्यते।
द्वितीयादिषु तु यावच्छक्यं व्रताचरणं। ततो नेदं व्रतानुशासनं प्रथम-रजोदर्शनकालिकं भवितु मर्हति-किञ्च, इदं हि त्रिरात्र व्रतं "यां मल-वद्वाससं" मित्यारभ्य 'तिस्रो रात्रीर्व्रतं चरे दंजलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय" (तै सं. 2-5-1) इत्युत्पत्स्यमान-प्रजावैगुण्याभावफलकं श्रूयते । अतोत्र विवाहात्प्राक् प्रजोत्पादनानधिकृतायाः कथमत्र प्रजार्थे व्रते अधिकारः । अपि च, यथा उपनयनावसाने उत्तरस्या मंशान्ति (1-11-23) इति कुमारस्य "ब्रह्मचार्यसि" (एकाग्नि काण्डः प्र 2 ख-6) इति मन्त्रेण ब्रह्मचर्याङ्गव्रतानुशासनं विधीयते एवमिहापि विवाहोत्तर रजोदर्शन कालाश्रितं गुणवत्प्रजाफलकं किञ्चिद्व्रतमनुशासनतया विधीयते, तत्कथं विवाहात्प्राचीनेऽपि रजोदर्शने नु सम्भवति ॥ "तस्मान्मलवद्वाससा न संवदेत" (तै. सं 2-5-) इत्यादि श्रुति विहितमप्रायत्यं तु भवत्येव । व्रतमात्रानुशासनस्य विवाहानन्तरं विधानात् । अथवा भवतु नाम व्रतमिदंप्रागपि विवाहात् , तच्चोपदिश्यतामिदानीमिव मात्रादिभिः। नहीदानीं पितरावाचार्यो भूत्वा व्रतानि संशास्तीति लोके दृश्यते। दृश्यते तु मात्रादिरेव अनुशास्तीत्याचारः ॥ विवाहानन्तरविधानन्तु "वेदमनूच्याचार्योऽन्ते वासिनमनुशास्ति" इत्यत्रेव सिद्धस्यापि संस्कारार्थं नियमार्थं च पुनर्विधानं । तत्र हि सिद्धस्यापि सत्यवदनादेः पुनर्विधानं संस्कारार्थं नियमार्थं च । इति श्रीमद्भगवत्पादाचार्यैः विवृतं॥ तस्मात् व्रतानुशासनविधानावष्टम्भेन रजोदर्शनात्प्रागेव विवाहो गृह्यकृदभिप्रेत इति साधनं सर्वथा न घटते ॥ यदप्यन्यदु-

च्यते "गृह्यव्याख्यायां सुदर्शनाचार्येण, यद्विवाहचतुर्थापररात्र एव कदाचित् ऋतुसमावेशनमपि कर्तव्यतया प्राप्नोतीत्युच्यते "अस्मिन्नेव समये यदि दैवाद्दतु समावेशनमपि कर्तव्यं स्यात् तदा पूर्वमारोहोरुमित्यादि जपः ततो विष्णुर्योनि मित्यादिभिः अभिमन्त्रणमि' ति, नैतदृतुमतीविवाहाभिप्रायेण । किन्तु आपत्कल्पतया अभ्यनुज्ञात द्वादशवयस्काविवाहे मध्येविवाहं यदि कन्या ? दैवात् ऋतुमती भवेत् तत्र स्नानानन्तरं विवाह शेषहोमावसाने ऋतु समावेशनस्याप्यस्ति प्राप्तिरित्यभिप्रेत्य अत एवात्र दैवादित्युक्तमाचार्येण । किञ्चात्र मध्येविवाहं प्रथमार्तवसम्भवेऽपि पुनर्विवाहहोमाद्यनुष्ठानं विधीयते वैद्यनाथ दीक्षितैः वर्णाश्रमकाण्डे "प्रधानहोमे निर्वृत्ते" इत्यादि वचनैः, तच्च कायकृच्छ्र चान्द्रायणादिपूर्वकमेव कर्तव्यं । नान्यथा वधू परिग्रहमर्हतीति हेमाद्रिणा स्पष्टमुपदिश्यते, 'विवाहे वितते तन्त्रे" इत्यादि वचनैः ॥ अपि चात्र हेमाद्रिवचनेषु सर्वशेषतया श्रूयमाणेन "पूर्वं पुष्पवती न चेत्' इत्यनेन विवाहात्प्राक् पुष्पवत्याः प्रायश्चित्तशतेनापि अपरिग्राह्यता विस्पष्टमुपलभ्यते ॥ सति चैवं कथं सुदर्शनाचार्यः शास्त्रविरुद्धं ऋतुमतीविवाहमपि कर्तव्यतयाऽभिप्रेयात् । तस्मात् विवाहकालमध्यकालप्रासदैवायत्तप्रथमरजोदर्शनसम्भावनाभिप्रायकेण, "यदि दैवादि 'ति वाक्येन सुदर्शनाचार्यस्यापि ऋतुमतीविवाहस्सम्मत एवेति कल्पन मसङ्गतमिति"॥--

अत्र ब्रूमः । इह तावत् वैद्यनाथ दीक्षितोदाहृतानां हेमाद्युदाहृतानां च वचनानां एकविषयकत्वमेव न सिध्यति, यतो वैद्यनाथदीक्षितोदाहृतवचनेषु विवाहमध्यरजादर्शने प्राथम्यं न श्रूयते । न च प्रायश्चित्तं । स्नातायां, पुनर्विवाह होम, तच्छेषहोमादि समावेशनान्तानि, रजोदर्शनात् चतुर्थ एव दिने विधीयन्ते । तथा च तद्वचनानि "विवाहकाले रजोदर्शने कर्तव्यमाह --अत्रिः ।

विवाहे वितते यज्ञे होमकाल उपस्थिते ।
कन्या मृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ।
स्नापयित्वा तु तां कन्यां अर्चयित्वा हुताशनं ।
युञ्जानहोमं कुर्वीत ततः कर्म प्रयोजयेत् ।
प्रधानहोमे निर्वृत्ते कुमारी यदि स्यार्तवा ।
त्रिरात्रेऽपगते पश्चात् शेषं कार्यं समापयेत् ।

स्मृतिभास्करे -

विवाहहोमे प्रक्रान्ते यदि कन्या रजस्वला ।
त्रिरात्रं दम्पती स्यातां पृथक् शय्यासनाशनौ॥
चतुर्थेहनि संस्नातौ तस्मिन्नग्नौ यथाविधि ।
विवाह होमंकुर्यातां इत्यादिस्मृति संग्रहः " । इति।

हेमाद्रौ तु प्रकरणादिकं सर्वमपि विवाहमध्यप्राप्तप्रथमार्तवविषयं दृश्यते। यथा "अथविवाहमध्ये वध्वाः प्रथमार्तव प्रायश्चित्तमाह देवलः ।

विवाहे वितत तन्त्रे होमकाल उपस्थिते ।
वधूः पश्येद्यदा पुष्पं प्रथमं दोषसम्भवं ।
सा वधूः शूद्रकन्यास्यात् तत्पतिर्वृपलोपमः ।
तयोः पुत्रस्तु वृपलः तेयान्ति नरकंध्रुवं ।

मरीचिः —

विवाहदिवसादूर्ध्वम् आरभ्यप्रथमार्तवा ।
वधूर्यौशेषहोमात्प्राक् उभौ नरकगामिनौ ।

गौतमः :

विवाहशेषहोमात्प्राक् वधूर्या प्रथमार्तवा ।
तत्पतिस्तद्वधू-श्चोभौ प्रायश्चित्तमिहार्हतः ।
हविष्मतीरिमा अद्भिः वधूंतां स्नापयेन्मुदा ।
अन्यवस्त्रेणसंछाद्य तस्मिन्नग्नौ विधानतः ।

संस्काराज्येन जुहुयात् युंजानेनिद्वयं मुदा ।
हुत्वा तदाचरेत् कृच्छ्रं पावनंकायसंज्ञितं ।
एवं वै प्रत्यहंकुर्यात् पञ्चमेऽहनि पूर्ववत् ।
स्नापयित्वा परीधाय पूर्ववच्छुद्धवाससा ।
पूर्ववज्जुहुयादग्नौ ततश्चान्द्रायणं पृथक्।
कृत्वा तौ पापशुद्धौ स्तां अन्यथादोषसम्भवौ ।
तदानीं न परित्याज्या पूर्वं पुष्पवती न चेत् ।
न योग्याहव्यकव्येषु सा नारी वृषली भवेत् ।
प्रायश्चित्तं तदा कृत्वा कर्मकुर्वन्न दोषभाक् ''

इति — अत्र हि विधीयमानं प्रबलतरं प्रायश्चित्तं पञ्चमेऽहनि पुनर्विवाह विधानं च प्रथमार्तव दर्शनविषयमेवेति स्पष्टं, ततश्च वैद्यनाथदीक्षितोदाहृतः कल्पो निमित्तगतविशेषाश्रवणात् कल्पभेदाच्च द्वितीयाद्यार्तवमेव गोचरयेत् । न चानयोः कल्पयोः शाखान्तराधिकरण न्यायेन उपसंहारोन्याय्यः । निमित्तगतप्राथम्य तदभावाभ्यां नैमित्तकयोरपि भेदात् सतिहि कर्मैकत्वे न्याय्यः उपसंहारः ॥ सतिचैवं वैद्यनाथदीक्षितोदाहृतानां हेमाद्युदाहृतानां च वचनानामेकार्थतापादनं कथं नाम्नोपपन्नं स्यात् ॥ किञ्चात्र वयोनिर्णयकाराः हेमाद्र्युक्तेषु "हविष्मतीरिमा आपः" इत्यादिगर्गवचनेषु "पूर्वं पुष्पवती न चेत्" इत्यन्तं वचनजातमुदाहृत्य, "न योग्याहव्यकव्येषु" इत्यादिवाक्यशेष मपलप्य, पूर्वं पुष्पवती न चेदित्यस्य प्रायश्चित्तापरित्यागविधिद्वयविशेषणतां सम्पाद्य, विवाहात् प्राक् अपुष्पवत्या एव इदं प्रायश्चित्तं, परिग्रहश्च; प्रागेव पुष्पवत्यास्तु प्रायश्चित्तशतेनापि परिशुद्धिः परिग्रहो वा न स्यादिति निरधारयन ॥ वचनानुपूर्व्यान्तु पूर्वं पुष्पवती दृष्टप्रथमार्तवा तदानीं प्रायश्चित्तानन्तरं न परित्याज्या परित्यागंनार्हति । नचेत् , प्रायश्चित्तं न कृतं चेत् , सा नारी, हव्यकव्येषु योग्या न भवेत् इत्येवार्थः स्वरसतःप्रतीयते न विवाहात्प्राक् पुष्पवत्याविवाह्येत्यपि ॥

अपि च । विवाहात्प्राक् दृष्टरजसः कन्यायाः लघुप्रायश्चित्तपूर्वकं विवाहः प्रतिपाद्यते निर्णयसिन्धौ । यथा "अत्र प्रायश्चित्तमुक्तं आश्वलायनेन ।

कन्यां ऋतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः ।
शुद्धिं च कारयित्वा तां उद्वहेदनृशंसधीः ।
पिता ऋतून् यदुन्मास्तु [illegible] ऋतुर्भोः ।
दानावधि गृहे यत्नात् पालयेच्च [illegible]तीम् ॥
दद्यात्तदृतुसंख्या[illegible] गाः शक्तः [illegible] यदि ।
दा[illegible]कं त्वेकाऽपि निर्धन[illegible] ।
दत्वा[illegible] ब्राह्मणस्यैकं [illegible] ।
तस्मात्तामृतु संख्यन्तु [illegible]प्रतिभोजयेत् ।
उपोष्य त्रिरात्रं [illegible] ॥
अदृष्टरजसे दद्यात् कन्यायै [illegible] ।
तामुद्वहन् वरश्चापि कूष्माण्डैर्जुहुयाद्द्विजः" । इति ।

अत्र कन्यापितुः ऋतुसंख्यया गोदानं—तदशक्तौ चैकगोदानं । तत्राप्यशक्तौ ऋतुसंख्याकब्राह्मणभोजनं प्रायश्चित्तं । कन्यायास्तु त्रिरात्रोपवासमात्र शुद्धिहेतुः । इदं च यदशक्तोऽपि काले कन्यां न प्रयच्छति तद्विषयमिति माधवाचार्याभिप्रायः प्राङ्निरूपितः ॥ वरोद्वोढुः कूश्माण्ड होमेनैव शुद्धिः । एवं विवाहात् प्राक्, मध्ये, तत्रैव प्रथमे च, रजोदर्शने जायमानेऽपि शुद्धिभेदेषु कथं प्रायश्चित्तशतेनापि अविवाह्या कन्येति वयोनिर्णयोक्तिस्सिद्धि मुपेयात् ॥ एवमुक्तरीत्या त्रिविधेष्वपि आर्तवेषु वैवाहिक समावेशनेन सह ऋतुसमावेशनस्यापि, अस्ति प्रसङ्गः । तच्च दैवायत्तमेव । विवाहस्य मुख्यकालातिक्रमे दैवं विना को वा अन्यो दृष्टहेतुः। एवमेवाभिप्रेत्य सुदर्शनाचार्यः—"यदि दैवादृतुगमनमपि" इत्याद्यवोचदिति युक्तं ॥

एवमापस्तम्बगृह्य परामर्शात् सिध्यत्येव चतुर्थापररात्रे समावेशनं । बोधायनगृह्यसूत्ररीत्यापि अस्तीत्युक्तं प्रागेव प्रसङ्गात्। यद्यपि भगवानाश्वलायनः, त्रिरात्रं ब्रह्मचर्यमात्रं विधत्ते । न चतुर्थीसमावेशनमपि । तद्गृह्यानुसारिकारिकाकारो, भट्टकुमरिलाचार्यस्तु उपगमनान्तमेव विवाहविधिं परिसमापयति । "स्वस्त्यादि वाचयित्वादौ स्त्रियं तामुपगच्छति । मुहूर्ते शोभने तस्याः व्रीडा न स्यात् यथा तथा" इति॥ऋतूपगमनं च पृथगुच्यत एव।एवं जैमिनीय गोभिलादिगृह्यसूत्रेष्वपि विवाहाङ्ग मुपगमनमुपदिश्यत एव । तानि च ग्रन्थात् बहिः सङ्कलितानि ॥ ततो वयोनिर्णयोक्त दूषणानां इह लेशतोऽप्य सम्भवात् निर्दोषमिह सिध्यत्येव चतुर्थमपि लिङ्गं समावेशनरूपं गृह्यशास्त्रे ॥

इदमेकमेवालं विवाह्यायाः युवतिभावप्रसाधनाय प्राक्प्रसाधितानि च लिङ्गान्युपकुर्वन्ति —ततश्चैवं विमृश्यमानानि गृह्यसूत्राणि युवतिविवाहपक्षमेव दृढतरमुपोद्बलयन्ति — विवाहविधि विनियुक्तास्तु मन्त्राः —"उपमामुच्चा युवतिर्बभूयाः" एकाग्निकाण्डः। 2-22 इत्यादयो यथा युवतिभावं विवाह्यकन्यायाः ज्ञापयन्ति— तथा न क्वापि बालिकात्वमपि ज्ञापयन्ति । यद्यपि आशीरर्थकलोडादि दर्शनात् युवतिभावस्य विवाहकालिकतां न गमयन्ति मन्त्रलिङ्गानि इति उक्तमेव वयोनिर्णयकारैः। तथापि अत्र निर्दिष्टे मन्त्रे युवति भावो नाशीः कोटावन्तर्भवति। "युवतिस्त्वं सम्भोगकाले उपरिसन्तम्मां अनुभूयाः " इत्येव हरदत्तस्य पदयोजना दृश्यते । न युवतिस्सती, इति । किञ्चायं मन्त्रो वैवाहिकसमावेशनप्राक्कालिके वधू दर्शने विनियुज्यते ।

अस्य च मन्त्रस्य पूर्वार्धे "अपश्यन्त्वा मनसादीध्यानां स्वायान्तनूँ ऋत्विये नाथमानां," इत्यत्रापि "दीध्यानां दीप्यमानां ध्यायन्तीं व

नाथमानां प्रार्थयमानां अपश्यं पश्यामि"। इति मूले व्याख्यायां च वर्तमानप्रत्यय एव शानजादिर्दृश्यते ॥ श्रौतानि लिङ्गानि च स्वरूपतः स्मृत्यपेक्षया प्रबलान्येव अभ्युपयन्ते । प्रतनैराचार्यैः यथा वेदोऽखिलो धर्ममूलं । स्मृतिशीलेच तद्विदां आचारश्चैव साधूनां आत्मनस्तुष्टिरेव च ॥ इतीदं मनुवचनं व्याचक्षाणाः वैद्यनाथदीक्षिताः — 'वेद इति जातावेकवचनं। धर्ममूलं धर्मस्य प्रमाणं न केवलं विध्यात्मकवेद एव धर्मप्रमाणं। किन्तु,मन्त्रार्थवादात्मक इत्युक्तं।अखिल इति। अथ यत्र प्रत्यक्षो वेदो नोपलभ्यते तत्र कथमित्यत उक्तं। स्मृतिशीलेच तद्विदा । इति,'' इति मन्त्रादिश्रुतेरपि स्वरूपतः स्मृत्यपेक्षया प्राबल्यमेवाभिप्रयन्ति-

ऋक्संहितायां दशम मण्डलगतान् वैवाहिकमन्त्रान् व्याचक्षाणस्सायनाचार्योऽपि, जाग्रत्यामपि विनियोजिकायां गृह्यस्मृतौ "विनियोगस्तु लैङ्गिकः" । इति स्मृत्यपेक्षया श्रौतलिङ्गस्य प्राबल्यं सूचयति यत्र तु स्मार्त्यापि विनियोजकश्रुत्या मान्त्रमपि लिङ्गं विरुणद्धि, तत्र मूलभूतश्रौतविध्यनुमानबलादस्तु स्मार्तश्रुतेरपि लिङ्गतः प्राबल्यं, यत्र तु न विरोधः । तत्र स्वार्थस्यापि साधने प्रभवत्येव लिङ्गं । एवं प्रबल श्रौतलिङ्गानुगृहीताः गृह्यस्मृतयः मन्वादिभिः गौणतयाऽभिप्रेतमपि युवतिविवाहपक्षमेव सुदृढमुपोद्बलयन्ति ॥ ततश्च नग्निकाविवाहादप्यृतुमती विवाहस्साधीयानित्ये वसिद्ध्येत्। वस्तुतस्तु, गर्भाधानादि पुरुषसंस्काराणां क्रमकल्पोपदेशमात्रेण चरितार्था गृह्यस्मृतयः विधि निषेधैकशरणानि मन्वादिधर्मशास्त्राणि न बाधितुमीशते । तदविरोधेनैवतु प्रमाणीभवन्तीतियुक्तम् ॥ ततश्च मन्वादिभिरतिप्रशस्ततयाऽभिप्रेतो नग्निका विवाहः न कदाचिदपि गृह्यगतसमावेशनविधिना बाध्येत। गृह्यसूत्रेषु तदुपदेशस्तु कदाचिदृतुमतीविवाहेषु तत्सम्भवाभि प्रायेणापि सार्थकस्स्यात् ॥

अतएव नग्निकाविवाहे समावेशनरूपाश्रयलोपमभिप्रेत्य तदाश्रितजपोऽपि माभूदित्याह सुदर्शनाचार्यः। युवतिविवाहेऽपि रागप्राप्तत्वात् समावेशन मैच्छिकं माभूदिति तन्नियममाह, हरदत्ताचार्यः । एवं मन्वादिभिर्गौणतयाऽभ्यनुज्ञायमानोऽपि युवति विवाहः गृह्यसूत्रैः मन्त्रैश्च सम्यक् पुष्यते, नग्निकाविवाहस्तु स्मृतिकारैः कन्यादातुः स्वर्गादिफलकथनेन रजस्वलाविवाहनिन्दया च सुतरां प्रशस्यते । यावदिदानीमास्तिकैरनुष्ठीयते च यावच्छक्यं, अत्र समावेशनरूपाङ्गलोपप्रसङ्गेऽपि मन्त्रजपमात्रेणापि पूर्यत एव । तदङ्गमुत्तंभनादिवत् । यथोत्तंभनादिगृहप्रवेशान्तानां पदार्थानामभावेऽपि तत्तन्मन्त्रमात्रं खलु जप्यते शिष्टैः ॥ एतदुभयातिक्रान्तस्तु बालिकाविवाहः । न तावत् स्मृतिभिः प्रशस्यते फलोपदेशादिना न गृह्यैः पुष्यते, दूरं तु मन्त्रलिङ्गानि, तथाप्यनुष्ठीयत एव जनैः स्मृतीनामभ्यनुज्ञामात्रात् युवति विवाहस्तु स्मृतिभिस्तदनुसारिभिर्निबन्धैश्च अभ्यनुज्ञायमानोऽपि वैवाहिकमन्त्राणां तात्पर्यविषयोऽपि गृह्यकाराणामभिप्रेतोऽपि वरालाभादिनिमित्तैः प्राप्तप्रसरोऽपि छद्मना तत्र तत्रानुष्ठीयमानोऽपि यदि सर्वथा शिष्टजनैः नाभ्यनुज्ञायेत । तर्हि अस्तु विवाहो नग्निकानामेव कन्यकानां, सन्तु वा यावद्विवाहं अपुष्पवत्य एव कन्यकाः प्रसादात् पारमेश्वरात्, सर्वथापि खल्वस्माभिराशासनीयं मङ्गलम् ॥

॥ इति गृह्यविमर्शो नाम तृतीयः परिच्छेदः ॥

॥ विवाहकालविमर्शः समाप्तः ॥

# शुद्धाशुद्ध पत्रिका।

| पुटं | पाङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 2 | 5 | पशस्ता | प्रशस्ता |
| 3 | 2 | पितृणां | पितृणां |
| 3 | 7 | मन्त्रवता | मन्त्रवत |
| 4 | 15 | सूर्य वर्चसं | सूर्यवर्चस |
| 6 | 6 | मा भीवाङ्गष्टं | मोऽभीवाङ्गष्ट |
| ,, | 14 | सुप्रजस्व | सुप्रजस्त्वं |
| 8 | 2 | योष्टाः | योष्ठाः |
| 8 | 8 | व्रताऽव्रतानि | व्रता व्रतानि |
| ,, | 15 | पाटः | पाठः |
| ,, | 18 | रेता भृत | रेतोभृत् |
| ,, | 19 | वाक्त्म | वाक्त्वं |
| 9 | 5 | प्राग्घोमात | प्राग्धोमात |
| ,, | 8 | अग्नेय | अग्नेय |
| ,, | 12 | दीक्ष्ये | दीक्ष्य क्षय |
| ,, | 15 | ओप्यभिघारयति | ओप्याभिघारयति |
| 11 | 10 | देवाणां | देवृणां |
| 12 | 8 | चर्मानडुहं | चर्माऽऽनडुह |
| 14 | 3 | पार च क्षते | परिचक्षते |
| ,, | 8 | वसमा | वासमा |
| ,, | 13 | प्रफर्व्य | प्रफर्व्यं |

| पृष्ठं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 15 | 13 | द्वयाहृतीभिः | ब्याहृतीभिः |
| ,, | 14 | उतराभ्या | उत्तराभ्यां |
| 16 | 1 | मम्मातरिश्वा | सम्मातरिश्वा |
| ,, | ,, | समुद्देष्टो | समुद्देष्ट्री |
| ,, | 15 | बहृचास्तु | बह्वृचास्तु |
| ,, | 16 | ऊकारान्यर | ऊकारात्परं |
| 17 | 11 | मरस्व ति | सरस्वती |
| 18 | 19 | एरयग्व | एग्यस्व |
| ,, | 20 | प्रोत्साह्लय | प्रोत्साहय |
| 19 | 2 | शकारः | सकारः |
| 21 | 17 | तब्रमर्वात् | तमब्रवीत् |
| 22 | 1 | अनाकुल | अनाकुल |
| 26 | 3 | कामयीनि | कामयेत |
| 26 | 1 | पुरस्तत् | पुरस्तात् |
| ,, | 8 | तावेह | तावेहि |
| ,, | 10 | परिणियऽइमानं | परिणीयाइमानं |
| ,, | 12 | ह्विलाजान् | ह्विर्लाजान् |
| 28 | 10 | जीवरुदन्ति | जीवांरुदन्ति |
| 29 | 3 | अस्यानद्धुहं | अस्याऽऽनद्धुहं |
| ,, | ,, | प्राग्रीव | प्राग्ग्रीवं |
| ,, | 7 | अऽशायिनौ | अधश्शायिनौ |
| 29 | 10 | मंज्ञिता | संज्ञिताः |
| 30 | 11 | उत्पन्नत्वात् | उत्पन्नत्वात् |

| पुटं | पाङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 31 | 4 | अभ्युत्क्रमयति | अभ्युत्क्रामयति |
| ,, | 5 | अभ्युक्रामयेत्पूर्वय | अभ्युत्क्रामयेत्पूर्वं |
| 32 | 14 | तृष्णि | तूष्णीं |
| 35 | 11 | उपस्थानत् | उपस्थानात् |
| 36 | 1 | क्रामयेत | कामयेत |
| ,, | 10 | रति शलि | रतिशीला |
| ,, | 14 | ,, | ,, |
| ,, | 15 | वर्पेणाधिका | वर्षेणाधिका |
| ,, | 16 | पश्चाऽजाता | पश्चाज्जाता |
| 37 | 8 | प्रक्षाल्य | प्रक्षाल्य |
| ,, | 9 | अंग्ररुप | अग्नेरुप |
| 38 | 9 | शलीकिः | शालिकः |
| 39 | 7 | उादपात्रं | उदपात्रं |
| 40 | 10 | ब्रह्मण | ब्राह्मण |
| 42 | 14 | अपुंवृत्तार्थायाः | अपवृत्तार्थायाः |
| ,, | ,, | प्राणिपर्यंतं | प्राणित्येतं |
| 42 | 15 | अस्याचान्तोदकार्यं | अस्या आचान्तोदकार्यं |
| 43 | 1 | मन्ते | मन्ते |
| 44 | 15 | तिरात्रत् | त्रिरात्रात् |
| 45 | 7 | रन्धाणि | रन्ध्राणि |
| 46 | 11 | त्रिरात्रादूर्ध्वं | त्रिरात्रादूर्ध्वं |
| 48 | 15 | अतिरिक्ता | अतिरिक्ता |
| 49 | 12 | त्रितीयोध्यायः | तृतीयोऽध्यायः |

| पुटं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 58 | 7 | ज्येष्ठो | ज्येष्ठा |
| 67 | 13 | । जता | जितो |
| 70 | 5 | मातमाहो | मातामहो |
| 71 | 16 | ऋन्या | कन्या |
| 80 | 9 | मप्नोति | माप्नोति |
| 81 | 20 | शेषाक्किचित् | शेषाकिंचित् |
| 83 | 10 | वैद्यात् | विद्यात् |
| 83 | 12 | मातृत्तद् | मातृदत्त |

॥ श्रीः ॥

# ॥ वैवाहिकमन्त्रभाष्यम् ॥

हरदत्तमिश्रप्रणीतम्.

## आपस्तम्बगृह्यसूत्रं

### खण्डः 4.

[सू—1.] सुहृदः समवेतान् मन्त्रवतो वरान् प्रहिणुयात् ।

[सू—2.] तानादितो द्वाभ्यामभिमन्त्रयेत । "प्रसुग्मन्ता" इति ।

[सू—3.] स्वयं दृष्ट्वा तृतीयां जपेत् । "अभ्रातृघ्नीम्" इति ।

[सू—4.] चतुर्थ्या समीक्षेत ।

[मन्त्रः] अघोरचक्षुरपतिघ्न्येधि शिवापतिभ्यस्सुमनास्सुवर्चाः जीवसूर्देवकामा स्योना शंनो भव द्विपदे शंचतुष्पदे ॥

चतुर्थ्या समीक्षेत—अघोरेति। अवयवशो निरूपणं समीक्षणम्। हे वधु! त्वं अघोरचक्षुः अपतिघ्नी च एधि भव। शिवा पतिभ्यः। देवराद्यपेक्षं बहुवचनम्। मह्यं पत्ये देवरादिभ्यश्च शिवा भव। सुमनाः सुवर्चाश्च भव। या जीवत एव सूते, सा जीवसूः। देवान् यष्टव्यत्वेन या कामयते, सा देवकामा। स्योना प्रशस्ता। सर्वत्र भवेति सम्बध्यते। नः अस्माकं सम्बन्धिने द्विपदे शंभव, चतुष्पदे च शंभव सुखकरी भव।

[सू—5.] अङ्गुष्ठेनोपमध्यमया चाङ्गुल्या दर्भं संगृह्योत्तरेण यजुषा तस्या भ्रुवोरन्तरं संमृज्य प्रतीचीनं निरस्येत्। "इदमहम्" इति।

[सू—6.] प्राप्ते निमित्त उत्तरां जपेत्।

[मन्त्रः] जीवाँ रुदन्ति विमयन्ते अध्वरे दीर्घामनुप्रसितिं दीधियुर्नरः। वामं पितृभ्यो य इदँ समेरिरे मयः पतिभ्यो जनयः परिष्वजे।

कन्यावियोगकाले बन्धुजनस्य रोदने जपः—'जीवाँ रुदन्तीति॥ कन्याया एव रोदने इत्याश्वलायनः। यथाऽऽह—'जीवां रुदन्तीति रुदत्यां' इति॥ जीवन्तीमेवैनां कन्यां उद्दिश्य रुदन्ति अध्वरे, ध्वरतिर्हिंसाकर्म। हिंसारहिते काले तदिदं विमयन्ते व्यत्ययं कुर्वते हर्षस्थाने शोचन्ति। त इमे दीर्घां दीर्घकालानुवर्तिनीं प्रसितिं प्रकृष्टं भावबन्धं आवयोः अनुदीधियुः अनुध्याय-

न्तु नरः कन्याबन्धुमनुष्याः। ये इदं विवाहकर्म समेरिरे प्रेरिरे प्रवर्त-यन्तिस्म। कीदृशं? पितृभ्यो वामं पितॄणां वमनीयम्. मयः पतिभ्यः पत्युर्मम सुखरूपम्, जनयः षष्ठ्येकवचनस्थाने प्रथमाबहु-वचनम्। जन्याः अस्याः वध्वाः परिष्वजे परिष्वङ्गाय पर्याप्तम्, एवंभूतं विवाहकर्म प्रवर्तितवन्तः, ते कन्याबन्धुमनुष्याः आवयोः भाविनं भावबन्धमालोच्य मारुदन्तु इत्यर्थः।

[सू—7.] युग्मान् समवेतान् मन्त्रवता उत्तरयाद्वयः प्रहिणुयात्। "व्युक्षत्क्रूरम्" इति।

[सू—8.] उत्तरेण यजुषा तस्याः शिरसि दर्भेण्वं निधाय तस्मिन्नुत्तरया दक्षिणं युगच्छिद्रं प्रतिष्ठाप्य छिद्रे सुवर्णं उत्तरयाऽ न्तर्धाय—

[मन्त्रः] अर्यम्णो अग्निं परियन्तु क्षिप्रं प्रतीक्षन्ताँ श्वश्रुवो देवराश्च॥ खेऽनसः खेरथः खेयुगस्य शचीपते। अपालामिन्द्र त्रिः पूत्व्यकरत्सूर्यवर्चसम॥ शन्तेहिरण्यँ शमु सन्त्वापः शं ते मेधीभवतु शंयुगस्य तृद्म। शं त आपः शतपवित्रा भवन्त्वथा पत्या तन्वँ सँसृजस्व॥

बध्वाः शिरासि दर्भेण्वनिधानम् अर्यम्ण इति। अर्यमा आदित्यः तस्य प्रसादात् अग्निं इदं विवाहाग्निं परियन्तु क्षिप्रं परिवेष्टय मण्डलीभूताः तिष्ठन्तु यथेदमिण्वं मण्डलीभूतं, परीत्यच

प्रतीक्षन्तां पश्यन्तु । के? श्वश्रुवः बध्वा ममच मातरः देवराश्च बध्वा ममच भ्रातरः ॥

तस्मिन्निण्वे दक्षिणं युगच्छिद्रं प्रतिष्ठापयति—खेऽनसइति ॥ अत्रेतिहासमाचक्षते — अपालानाम काचित् कन्या श्वित्रिणी । तां न कश्चिदुपयेमे । तस्याश्च मनसि कामः सदा बभूव कथं अहं इन्द्रं यजे इति । सा कदाचित् स्नानार्थं नद्यां अवतीर्णा स्रोतसा ह्रियमाणा तमेव कामं मनसि दधाना स्रोतसोपनीतं सोममपश्यत् । तं दन्तैः पिष्ट्वा तद्रसं इन्द्राय उपाहरत् । तमिन्द्रः पीत्वा रथस्यानसो युगस्येति त्रयाणां छिद्रेषु अपोनिरसार्य ताभिः तां त्रिः पूत्वा सूर्यवर्चसमकरोत् । इति तदेतत् 'कन्या वारवायति' इत्यस्मिन् वर्गे द्रष्टव्यम् । (ऋ. सं. VI. 6-14.) रथइति षष्ठ्यर्थेप्रथमा । रथादीनां खेषु छिद्रेषु अपो निरसार्य त्रिः पूर्त्वी । छान्दसो रेफउपजनः । पूत्वा शोधयित्वा । हे शचीपते हे इन्द्र! त्वं अपालांनाम कन्यां सूर्य वर्चसं अकरत् अकरोः । पुरुषव्यत्ययश्छान्दसः । तथैव एनामपि कुर्वित्यर्थः ।

छिद्रे सुवर्णनिधानमन्त्रः—शंत इति । छिद्रे निधीयमानं हिरण्यं ते शं भवतु । शमु सन्तु । 'उ' इत्यनर्थकः पादपूरणः। आपश्च तत्र निषिच्यमानाः ते शं सुखं सन्तु भवन्तु । अप्रसिद्धपाठस्तु 'समु शंत्वाप' इति । तत्राप्यर्थः स एव । शकारस-

कारयोर्व्यत्ययः । मेधी खलेवाली अत्र तु युगस्य अभिधानमेतत्। मेध्यपि ते शंभवतु । शतपवित्राः बहूनां शोधयित्र्यः आपश्च ते शं भवन्तु । विशेषणविवक्षया पुनर्वचनम् । अथ अनन्तरं पत्या मया तन्वं तनुं संसृजस्व संयोजय सम्भोगकाले ।

[सू—8 cont.] उत्तराभिः पञ्चभिस्स्नापयित्वोत्तरयाऽहतेन वाससाऽऽच्छाद्योत्तरया योक्त्रेण सन्नह्यति ।

[सू—9.] अथैनामुत्तरया दक्षिणे हस्ते गृहीत्वाऽग्निमभ्यानीयाऽपरेणाग्निमुदगग्रं कटमास्तीर्य तस्मिन्नुपविशत उत्तरो वरः ।

[सू—10] अग्नेरुपसमाधानाद्याज्यभागान्तेऽथैनामादितो द्वाभ्यां अभिमन्त्रयेत—

[मन्त्रः] सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥

आज्यभागान्ते उत्तराभ्यामभिमन्त्रणं—सोमः प्रथम इति ॥ सोमः प्रथमः त्वां विविदे लब्धवान् । तत उत्तरो गन्धर्वः विश्वावसुः । तृतीयस्त्वग्निः ते तव पतिः । मनुष्यजाः मनुष्यजातस्त्वहं ते तुरीयः चतुर्थः पतिः ॥

एष एवार्थः किंचिद्विशेषेणोच्यते—सोमोऽददिति ॥ सोमः अददत् अदात् दद्याद्वा गन्धर्वाय । गन्धर्वः अग्नये । अग्निः रयिं धनं पुत्रांश्च इमां त्वांच मह्यमदात् ॥

[सू 11;—14.] अथास्यै दक्षिणेन नीचा हस्तेन दक्षिणमुत्तानं हस्तं गृह्णीयात् ॥ यदि कामयेत स्त्रीरेव जनयेयमित्यङ्गुळीरेव गृह्णीयात् ॥ यदि कामयेत पुंस एव जनयेयमित्यंगुष्ठमेव सो भीवांगुष्ठमभीव लोमानि गृह्णाति ॥ गृभ्णामित इत्येताभिश्चतसृभिः ॥

[मन्त्रः] गृभ्णामि ते सुप्रजास्त्वाय हस्तं मया पत्या जरदष्टिर्यथाऽसः॥ य एति प्रदिशस्सर्वादि शोऽनुपवमानः । हिरण्यहस्त ऐरम्मस्सत्वा मन्मनसं कृणोतु ।

यद्योगाद्विवाहे पाणिग्रहणशब्दः । तत्र मन्त्राश्चत्वारः—गृभ्णामित इति । ते तव हस्तं अहं गृभ्णामि गृह्णामि । किमर्थं? सुप्रजास्त्वाय शोभनाः प्रजाः यस्याः सा सुप्रजाः । तस्या भावः सुप्रजस्त्वम् । छान्दसो दीर्घः, तस्मै । किञ्च मया पत्या सह यथा त्वं जरदष्टिः असः स्याः, तथा गृह्णामि जरदवस्थायाः प्राप्तिः तस्याः प्रकाशनं वा यस्याः सा जरदष्टिः । पुरन्धिः पुरुधीः बहुप्रज्ञः बहुकर्मा वा । भगादीनां चैतत् प्रत्येकं विशेषणम् । अन्येतु—इन्द्रस्याभिधानं मन्यन्ते । भगादयो देवाः मह्यं त्वा अदुः दत्तवन्तः । किमर्थं? मम गार्हपत्याय गार्हस्थ्याय ॥

य एतीति । एष पवमानः सर्वा दिशः प्रदिशश्चान्वेति अनुक्रमेणैति । हिरण्यहस्तः भक्तेभ्यो देयं हिरण्यं हस्ते यस्य सः

हिरण्यहस्तः ऐरम्मः, इरा अन्नं, तां मिमीते करोतीति इरम्मः अग्निः। तस्यायं सखा ऐरम्मः । वायुसख इति ह्यग्निं उपचरन्ति । स एवम्भूतो वायुः सः त्वा त्वां मन्मनसं मयि मनो यस्याः सा मन्मनाः, तादृशीं कृणोतु करोतु ॥

[सू—15.] अथैनामुत्तरेणाग्नि दक्षिणेन पदा प्राचीमुदीचीं वा दिशमभिप्रक्रमयत्येकमिष इति ।

[सू—16.] सखेति सप्तमे पदे जपति—

[मन्त्रः] सखा सप्तपदा भव सखायौ सप्तपदा बभूव सख्यंते गमेयँ सख्यात्ते मायोषँ सख्यान्मे मा योष्ठास्समयाव संकल्पावहै संप्रियौ रोचिष्णू सुमनस्यमानौ । इषमूर्जमभिसंवसानौ सन्नौ मनाँसि संव्रता सुमचित्तान्याकरम् । सा त्वमस्य मूहममूहमस्मि सा त्वं द्यौरहं पृथिवी त्वँ रेतोऽहँ रेतोभृत्वं मनोऽहमस्मि वाक्त्वँ सामाहमस्म्यृक्त्वँ सामामनुव्रता भव पुँसे पुत्राय वेत्तवै श्रियै पुत्राय वेत्तव एहि सूनृते ॥

सखेति सप्तमे पदे जपति—सप्त पदानि यया क्रान्तानि सा सप्तपदा । एवंभूता त्वं सखा भव । सप्तपदा सप्तपदौ । द्विवचनस्याकारः । सप्तपदौ त्वं च अहं च सखायं बभूव बभूविव छान्दसो विशब्दस्य लोपः । आदरार्थे पुन

र्वचनम् । सख्यं ते गमेयं गम्यासम् । सख्यात्ते मायोषं वियुक्तः पृथक्कृतो माभूवम् । त्वं च सख्यात् मे मा योष्ठाः । समयावेति संपूर्वस्य इणो लोटिरूपम् । समयाव संगतौ स्याव । संकल्पावहै इदमिदं च कर्तव्यमिति । संप्रियौ परस्परं संप्रीयमाणौ, रोचिष्णू सदृशसम्बन्धत्वात् परस्पराश्रयेण दीप्यमानौ, सुमनस्यमानौ सुमनायमानौ, भृशादिरयं छान्दसः सलोपाभावः । इषमूर्जमभिर्संवसानौ सहानुभवन्तौ समयावेति सम्बन्धः। नौ आवयोः, मनांसि व्यापारबहुत्वान्मनोबहुत्वम् । समाकरम् - सङ्गतानि करोमि । तथा व्रताऽव्रतानि कर्माणि समाकरम् यस्त्वया धर्मश्चरितव्यः सः अनया सहेति । तथा समुचित्तानि, 'उ' इत्यनर्थकः । मनस उक्तत्वाद्बाह्ये न्द्रियाण्यत्र चित्तानि । तान्यपि समा करम् । सा त्वं सेति ऋचोऽभिधानम् । अम इति साम्नः । ' सैवनामऋगासीत् अमोनाम साम ' इति ( ऐ - ब्रा - III - 2 - 23 ) बह्वृचब्राह्मणदर्शनात् । त्वं साऽसि ऋगासि । अमः अहम् । संहिताकाले ओकारस्य ऊकारः बह्वृचानां तु ' अमोऽहम् ' इत्येव पाठः । एतदेवादरार्थं पुनरुच्यते । अमूहमस्मि अमः अहमस्मि । सा त्वं ऋक्त्वम् । यथा ऋक्सामे परस्परं संबद्धे एवमावामपीत्यर्थः । द्यौरहं पृथिवी त्वम्, औत्तराधर्यं अत्र विवक्षितम् । रेतोऽहम् , कार्यकारणयोरभेदोपचारः। रेतो भृत् त्वं मयानिषिक्तस्य रेतसो भर्त्री त्वम्। मनोहमस्मि वाक्त्वं, यथा मनसा चिन्तितं वाक् ब्रूते एवमावयोरानुकूल्यमित्यर्थः । सामाहमस्मि ऋक् त्वम् । एवंभूता सा त्वं मां प्रति अनुव्रता अनुकूला भव । किमर्थं ? पुंसेपुत्राय

वेत्तवै पुमांसं पुत्रं लब्धुम्, श्रियै पुत्राय वेत्तवै श्रियश्च पुत्रस्य च लाभार्थम् । पुत्रस्य पुनर्वचनमादरार्थम् । स्वयपत्यलाभार्थे वा । एहि आगच्छ प्रियावाक् सूनृता । तद्योगात् सूनृते इत्यामन्त्रणम् ।

## खण्डः 5.

[सू—1.] प्राग्धोमात्प्रदक्षिणमग्निं कृत्वा यथास्थानमुपविश्य अन्वारब्धायामुत्तरा आहुतीर्जुहोति, सोमाय जनिविदे स्वाहेत्येतैः प्रतिमन्त्रम् ।

[मन्त्र.] (1) सोमाय जनिविदे स्वाहा (2) गन्धर्वाय जनिविदे स्वाहा (3) अग्नेयजनिविदे स्वाहा (4) कन्यला पितृभ्यो यती पतिलोकमव दीक्षामदास्थ स्वाहा । इत्यादयः षोडश प्रधानाहुति मन्त्राः ।

कन्यलेति ॥ कन्यैव कन्यला । लशब्दः उपजनः । पितृभ्यः पितृकुलात्, पतिलोकं पतिकुलं, यतीगच्छन्ती, दीक्षां कन्याव्रतं, अवादास्थ, दीक्षये इत्यन्तर्भावितण्यर्थस्य लुङिप्रथमपुरुषैकवचने रूपं । तकारस्य थकारश्छान्दसः । अवक्षापितवती, त्यक्तवतीत्यर्थः ॥

[सू—2.] अथैनामुत्तरेणाग्निं दक्षिणेन पदाऽश्मानमास्थापयति । "आतिष्ठ" इति ।

[सू—3] अथास्या अञ्जलावुपस्तीर्य द्विर्लाजानोप्यऽभिघारयति ।

[सू—4] तस्या स्सोदर्यो लाजानावपतीत्येके ।

[सू—5.] जुहोति "इयं नारी" इति ।

[सू—6.] उत्तराभिस्तिसृभिः प्रदक्षिणमग्निं कृत्वाऽश्मानमास्थापयति यथा पुरस्थात् ।

[सू—7–9.] होमश्चोत्तरया । पुनः परिक्रमणम् । आस्थापनम् ।

[सू—10–12.] होमश्चोत्तरया । पुनः प्ररिक्रमणम् । जयादि प्रतिपद्यते ।

[सू—13.] परिषेचनान्तं कृत्वोत्तराभ्यां योक्त्रं विमुच्यतां ततः प्रवावाहयेत् प्रवा हारयेत् ।

[सू—14–16.] समोप्यैतमग्निमनुहरन्ति । नित्यः । धार्यः ।

[सू –17–19.] अनुगतोमन्थ्यः श्रोत्रियाऽगारा द्वाऽऽहा र्यः । उपवासश्चाऽन्यतरस्य भार्यायाः पत्युर्वा ।

[सू—20.] अनुगतेऽपि वोत्तरया जुहुयान्नोपवसेत् ।

[सू—21.] उत्तरा रथस्योत्तम्भनी ।

[सू—22.] वाहावुत्तराभ्यां युनक्ति दक्षिणमग्रे ।

[सू—23.] आरोहतीमुत्तराभिराभिमन्त्रयते ।

[मन्त्रः] संराज्ञी श्वशुरे भव संराज्ञी श्वश्र्वांभव । ननान्दरि संराज्ञी भव संराज्ञी अधि देवृषु ॥ स्नुषाणाँ श्वशुराणां प्रजायाश्च धनस्यच । पतीनाञ्च देवृणाञ्च सजातानां विराड्भव ॥

संराज्ञीति । श्वशुरे संराज्ञी वल्लभा भव श्वश्र्वांच संराज्ञी भव । ननान्दरि पत्युः स्वसा ननान्दा वध्वाः, तस्यां च संराज्ञी भव । तथा देवृषु देवरेषु पत्युर्भ्रातरो वध्वाः देवराः, तेष्वपि संराज्ञी भव अधिशब्दः सप्तम्यर्थानुवादी ॥

एतदेव पुनरुच्यते—स्नुषाणामिति । अस्मद्गृहे याः स्नुषाः, तासाम्, श्वशुराणां श्वशुरस्य तद्भ्रातृणाम्, प्रजायाश्च तत्र आगामिन्याः, धनस्यच मदीयस्य, पतीनां च पत्युर्मम मत्स्थानीयानांच, देवृणां च देवराणां च अन्येषांच सजातानां गृहे मया सह जातानाम् , विराट् ईश्वरी भव ।

[सू—24–25.] सूत्रेवर्त्मनोर्व्यवस्तृणात्युत्तरया, नीलं दक्षिणस्यां लोहितमुत्तरस्यां । ते उत्तरामि रंनियाति ।

[सू—26.] तीर्थस्थाणु चतुष्पथव्यतिक्रमे चोत्तरां जपेत् ।

## खण्डः 6.

[सू—1–3.] नावमुत्तरयानुमन्त्रयते । नचनाव्यांस्तरतीवधू पश्येत् । तीर्त्वोत्तरांजपेत् ।

[सू—4.] श्मशानाधिव्यतिक्रमे भाण्डे रथे वा रिष्टेऽग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते परिषेचनान्तं करोति ।

[सू—5.] क्षीरिणामन्येषां वा लक्षण्यानां वृक्षाणां नदीनां धन्वनां च व्यतिक्रम उत्तरे यथालिङ्गं जपेत् :

[सू—6.] गृहानुत्तरया संकाशयति ।

[सू—7] वाहावुत्तराभ्यां विमुञ्चति दक्षिणमग्रे ।

[सू—8, 9.] लोहितं चर्मानडुहं प्राचीनग्रीवमुत्तरलोम मध्येऽगारस्योत्तरयाऽऽस्तीर्य गृहान्प्रपादयन्नुत्तरां वाचयति दक्षिणेन पदा । न च देहलीमभितिष्ठति ।

[सू—10.] उत्तरपूर्वदेशेऽगारस्याऽग्नेरुपसमाधानाद्याज्य भागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते, परिषेचनान्तं कृत्वा—उत्तरया चर्मण्युपविशत उत्तरो वरः ।

[सू—11.] अथास्याः पुँस्वोर्जीवपुत्रायाः पुत्रमङ्क उत्तरयोपवेश्य तस्मै फलान्युत्तरेण यजुषा प्रदायोत्तरे जपित्वा वाचं यच्छत आनक्षत्रेभ्यः ।

[मन्त्रः] प्रस्वस्थः प्रेयं प्रजया भुवने शोचेष्ट ॥ इह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि एना पत्या तन्वँ सँसृजस्वाथा जीव्री विदथमावदासि ।

तस्मै फलानि प्रयच्छति—प्रस्वस्थ इति। प्रसूयन्त इति प्रस्वः हे फलानि! यूयं प्रस्वः स्थः प्रसवशीलाः स्थ। छान्दसो विसर्जनीयः। स्थ भवथ। इयमपि वधूः भुवने प्रजया अपत्येन प्रसोचेष्ट प्रसोषीष्ट। यथा यूयं प्रसवशीलाः स्थ। तथेयमपि युष्मत्प्रसादेन प्रसवशीला भवत्वित्यर्थः।

उत्तरेजपति—इहप्रियमिति। इह गृहे प्रजया प्रियं ते समृद्धयतां प्रीतिस्ते वर्धताम्। अनेन प्रजासम्पत्तिरुक्ता, धर्मसम्पत्तिमाह, अस्मिम् गृहे गार्हपत्याय गृहपतिभावाय, जागृहि। अतिथीनामग्नीनां च परिचरणे अवहिता भव। कामसम्पत्तिमाह—एना अनेन, पत्या मया, तन्वं तनुं तव शरीरम्, संसृजस्व सम्भोगकाले। एवं चिरकालमनुभूय अथ अनन्तरं, जीव्री-जीर्णाभिधानमिति निरुक्तकार आह-'आत्वारम्भनजित्रयः' ऋ - सं - VI - 3 - 45 इत्यत्र जीर्णा सती विदथं यज्ञं तद्विषयं वक्तव्यं पुत्रादीनां आवदासि आभिमुख्येन वद; इत्थमिदं कर्तव्यमिति।

[सू—12.] उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य उत्तराभ्यां यथालिङ्गं ध्रुवमरुन्धतीं चदर्शयति।

## खण्डः 7.

[सू—1-6.] उपाकरणे समापनेच ऋषिर्यः प्रज्ञायते। सदसस्पति र्द्वितीयः। स्त्रियाऽनुपेतेन क्षारलवणावरान्नसंसृष्टस्य चहोमं परि च क्षते। यथोपदेशं काम्यानि बलयश्च । सर्वत्र स्वयं प्रज्वलितेऽग्नावुत्तराभ्यां समिधावादध्यात् । आपन्माश्रीः श्रीर्मागादितिवा ।

[सू—7.] एतदहर्वि जानीयाद्यदहर्भार्यामावहते ।

[सू—8.] त्रिरात्रमुभयो रधश्शय्या ब्रह्मचर्यं क्षारलवणवर्जनं च।

[सू—9.] तयो श्शय्यामन्तरेण दण्डो गन्धलिप्तो वससासूत्रेण वा परिवीत स्तिष्ठति ।

[सू—10.] तं चतुर्थ्यापररात्र उत्तराभ्यामुत्थाप्य प्रक्षाल्य निधाय—

[मन्त्रः] उदीर्ष्वातो विश्वावसो नमसेडामहेत्वा । अन्यामिच्छ प्रफर्व्यँ संजायां पत्या सृज । उदीर्ष्वातः पतिवति ह्येषा विश्वावसु-न्नमसागीर्भिरीट्टे अन्यामिच्छ पितृषदं व्यक्ताँ सते भागो जनुषा तस्य विद्धि ।

दण्डोत्थापनमन्त्रः उदीर्ष्वात इति । उर्दार्ष्व उत्तिष्ठ, अतः

शयनात् हे विश्वावसो! विश्वावसुर्नाम गन्धर्वः। तद्बुद्ध्या दण्डः स्थापितः तेनैवं संबोध्यते। नमसा नमस्कारेण, त्वा त्वां, ईडामहे याचामहे। अन्यां इच्छ प्रफर्व्यं प्रथमवयसं स्त्रियम्। इमां तु मम जायां पत्या मया सह संसृज।

उदीर्ष्वात इति। उदीर्ष्व उत्तिष्ठ, अतः शयनात्। पतिवतिह्येषा, छान्दसो ह्रस्वः। एषा हि पतिवती, मया पत्या तद्वती, विश्वावसुं त्वां नमसा नमस्कारेण गीर्भिः स्तुतिभिश्च ईडे याचे। अतश्च अन्यां इच्छ पितृषदं पितृगृहे स्थितां व्यक्तां अदत्तां असमाप्तविवाहाम् स हि ते स्वभूतो भागः जनुषा जन्मना तदर्थत्वं जात इत्यर्थः। तस्य विद्धि तं लभस्व।

सू—10-cont. अग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते परिषेचनान्तं कृत्वाऽपरेणाग्निं प्राचीमुपवेश्य तस्याश्शिरस्याज्य शेषाद्व्याहृतीभिरोङ्कारचतुर्थाभिरानीय उत्तराभ्यां यथालिङ्गं मिथस्समीक्ष्योत्तरयाऽऽज्यशेषेणहृदय देशौ सम्मृज्य।

[मन्त्रः] अपश्यन्त्वा मनसा चेकितानं तपसो जातं तपसोविभूतम्। इह प्रजामिह रयिँ रराणः प्रजायस्व प्रजयापुत्रकाम। अपश्यंत्वा मनसा दीद्ध्यानाँ स्वायां तनूऋत्विये नाधमानाम्। उपमामुच्चा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रकामे। समञ्जन्तु

विश्वेदेवास्समापो हृदयानिनौ । मम्मातरिश्वा सं धाता समुदेष्ट्री दिदेष्टुनौ ।

अथ वधूर्वरं समीक्षते । अपश्यन्त्वेति । त्वा त्वां अपश्यं पश्यामि मनसा हृदयेन सस्नेहमित्यर्थः । चेकितान जानन्तं मदभिप्रायम्, तपसः गर्भाधानादेरुपनयनपर्यन्तात्, जातं द्विजत्वेन जातम्, तपसः भिक्षाचर्यादेरध्ययनाङ्गभूतात्, विभूतं विभूतिमत्त्वेन निष्पन्नं विभूतिः श्रीः ऋचस्सामानियजूंषि, सा हि श्रीरमृतासतां इति दर्शनात् । इहमयि, प्रजां इह च गृहे, रयिं धनं रराणः ददत् प्रजया प्रजायस्व हे पुत्रकाम । यत्प्रजाया जन्म, तज्जनयितुरेव जन्म श्रूयते हि—"प्रजामनुप्रजायसे तदु ते मर्त्यामृतम्"—इति ।

वरोवधूमीक्षते—अपश्यन्त्वेति । त्वा त्वां अहं मनसा अपश्यं पश्यामि दीध्यानां दीप्यमानां ध्यायन्तीं वा स्वायां तनू स्वायां तन्वां सप्तम्याः पूर्वसवर्णदीर्घः तत्र "ईदूतौ च सप्तम्यर्थे"—इति प्रगृह्यसंज्ञायां सत्यामपि छान्दस ऊकारः सानुनासिकः । बह्वृचास्तु शुद्धमेवाधीयते इहापि केचित् ऊकारान्परमनुस्वार मधीयते ऊकारान्तस्तु शुद्धः । ऋत्विये ऋतुकाले भवो गर्भः ऋत्वियः । द्वितीयैकवचनस्य शे आदेशः ऋत्वियम्, नाथमानाम्, प्रार्थयमानां स्वे शरीरे मत्तोगर्भं प्रार्थयमानामित्यर्थः । उपेत्ययमनुशब्दस्यार्थे द्रष्टव्यः मां उच्चा उच्चं सम्भोगकाले उपरिसन्तम्, युवतिः यौव-

नावस्यां प्राप्ता त्वं, उपवभूया: अनुभूया: अनुभूय च प्रजया प्रजायस्व हे पुत्रकामे ।

उत्तरयाऽऽज्यशेषेण हृदयदेशौ समनक्ति, समञ्जन्त्विति । नौ आवयो: हृदयानि व्यापारबहुत्वात् बहुवचनम् । विश्वेदेवा: समञ्जन्तु सस्नेहानि कुर्वन्तु । आपश्च समंजन्तु । मातरिश्वा वायु:, सोऽपि समनक्तु । धाता, समनक्तु समुदेष्ट्री समित्यस्य देष्ट्रीत्यनेन सम्बन्ध: । संदेष्ट्री अन्तर्भावितण्यर्थोऽयम् , सन्देशस्य कारयित्री , संदेश: परस्परसम्भाषणम् । का पुन: सन्देष्ट्री सरस्वती, सम्भाषणस्य तदायत्तत्वात् । गर्भाधाने च तस्या: व्यापारदर्शनात् — 'गर्भं धेहि सरस्वति' इति । सा सन्देष्ट्री दिदेष्टु । अयमप्यन्तर्भावितण्यर्थ: । सन्देशं कारयतु, नौ आवयो: सम्भोगकालानुरूपं सम्भाषणं सरस्वति कारयत्वित्यर्थ: ।

[सू — 10 cont.] उत्तरास्तिस्रो जपित्वा

[मन्त्र:] प्रजापते तन्वं मे जुषस्व त्वष्टर्देवेभि: सहसाम इन्द्र । विश्वैर्देवैरातिभिस्संरराण: पुंसां बहूनां मातरस्स्याम ॥ आन: प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा । अदुर्मङ्गली: पतिलोकमाविश शन्नो भव द्विपदे शंचतुष्पदे ॥ तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरु उशती विश्रयाति यस्यामुशन्त: प्रहरेम शेफम् ।

अथ जपः—हे प्रजापते! त्वं मे तन्वं तनूं शरीरं जुषस्व सेवस्व प्रविश येनाहं रेतस्सेके समर्थस्स्याम् , 'आसिंचतु प्रजापतिः' इति दर्शनात् । हे त्वष्टः! त्वमपि मे तन्वं जुषस्व देवेभिः देवैः। देवाः विष्ण्वादयः 'विष्णुर्योनिं कल्पयतु' इत्यादिमन्त्रे निर्दिष्टाः । तैः सह कीदृशस्त्वं? सहसामः, सहेरसानच् , सहसानः तस्यैव छान्दसो नकारस्य मकारः रूपनिर्माणे समर्थ इत्यर्थः । 'त्वष्टारूपाणि पिंशतु' इति दर्शनात् । हे इन्द्र! त्वमपि मे तन्वं जुषस्व, विश्वेर्देवैः, तव रातिभिः मित्रभूतैः सह संरराणः सम्यगस्मभ्यं अभिहितं ददत् , पुंसां बहूनां मातरः, 'पिता मात्रा' इति पितुरेकशेषे प्राप्ते मातुरेकशेषः छान्दसः। द्वयोश्च बहुवचनम् मातरौ मातापितरौ स्याम स्याव। युष्मत्प्रसादादावां बहुपुत्रौ स्यावेत्यर्थः ।

आन इति । न इति द्वयोर्बहुवचनम्। प्रजापतिः आवयोः प्रजां आजनयतु । आजरसाय आजरसम्, आवां समनक्तु सस्नेहौ करोतु अर्यमा आदित्यः । ततः त्वंच अदुर्मङ्गलीः दुष्टानि मङ्गलानि लक्षणानि यस्याः सा दुर्मङ्गली ततोन्या अदुर्मङ्गलीः छान्दसः सुलोपाभावः। सुमङ्गलीभूत्वा पतिलोकं पत्युर्मम लोकं गृहं आविश, आवस। 'शंनः' इत्यादि गतम् ।

तामिति ॥ हे पूषन् ! यस्यां मनुष्याः बीजं वपन्ति शुक्लं उत्सृजन्ति तां मे शिवतमां अनुकूलतमां कृत्वा एरयस्व प्रेरयस्व, भार्यां मे प्रोत्साहयेत्यर्थः । भार्यायां हि बीजं वपन्ति, अन्यत्र निषेधात् ।

सा विशेष्यते- या नः 'अस्मदो द्वयोश्च' इत्येकस्मिन् बहुवचनम्। नः मह्यं ऊरू उशती कामयमाना, विस्रयांत विश्रयाते, शकारस्य शकारः छान्दसः पञ्चमोल्कारः विश्रयेत विश्लिष्टौ कुर्यात्। यथा योनिः विवृता भवति। यस्याच एवंभूताया उशन्तः कामयमानाः भूत्वा, शेफं शिश्नम्, प्रहरेम प्रक्षिपेम। पूर्ववत् बहुवचनम्।

सू ॥ शेपं समावेशने जपेदन्योवैनाम[व]भिमन्त्रयेत—

[मन्त्रः] आरोहोरुमुपबर्हस्व बाहुं परिष्वजस्व जायां सुमनस्यमानः। तस्यां पुष्यतं मिथुनौ सयोनी बह्वीं प्रजां जनयन्तौ सरेतसा ॥ आर्द्रया ऽरण्या यत्रामन्थत्पुरुषं पुरुषेण शक्रः। तदेतौ मिथुनौ सयोनी प्रजयाऽमृतेनेह गच्छतम् ॥ अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः। अहं प्रजा अजनयं पितृणामहं जनिभ्यो अपरीषु पुत्रान् ॥ पुत्रिणेमा कुमारिणा विश्वमायुर्व्यश्नुतम्। उभा हिरण्यपेशसा वीतिहोत्रा कृतद्वसू। दशस्यन्त्वा ऽमृताय कं शमूधो रोमशं हथो देवेषु कृणुतो दुवः।

अथ समावेशनकाले जपः। अन्योवैनाम[व]भिमन्त्रयेत—आरोहोरुमिति ॥ जपपक्षे तावदात्मनएवायमन्तरात्मनः प्रैषः। हे मदीयशरीरान्तरात्मन्! अस्या ऊरुं आरोह। आरुह्यच आत्मनो बाहुं बाहू उपबर्हस्व। उपबर्हणमालिङ्गनम्। इहतु तदर्थं प्रसारणम्। आलिंगनाय बाहू प्रसारय। प्रसार्यच परिष्वजस्व जायाम्। तस्यां सुमनस्यमानः प्रीयमाणो भूत्वा। तथाहि प्रजा, रूपादिसमृद्धा भवति। पुष्यतमित्यादि

जायया सहाभिधानम् । हे जाये ! हे मदीयशरीरान्तरात्मन् ! युवां पुष्यतं पुष्टौ भवतम्, मिथुनौ मिथुनीभूतौ, सयोनी सङ्गतोपस्थेन्द्रियौ, बह्वीं प्रजां जनयन्तौ, सरेतसा सरेतसौ चिरकालमविच्छिन्नेन्द्रियौ । एवैवानयोः पुष्टिः। यदुत प्रजासमृद्धिः । अभिमन्त्रणपक्षे तस्यामित्यन्तं पत्युरभिमन्त्रणम् । शिष्टं द्वयोः ।

आर्द्रयेति ॥ अत्रापि जपपक्षे शरीरान्तरात्मनोऽभिधानम्। यत्रेति यथार्थे । यथा कश्चित् आर्द्रया आज्याक्तया अरण्या अग्निं अमन्थत् एवं शक्रः इन्द्रः उपलक्षणमेतत् । पूर्वो विवाहस्य कर्ता इन्द्रादिः पुरुषेण पुरुषलक्षणेन शेफन पुरुषं पुमांसं गर्भममन्थत् मथनसदृशेन व्यापारेण निष्पादितवान्, तत् तद्वत्, एतौ मिथुनौ मिथुनीभूतौ युवां सयोनी सङ्गतोपस्थेन्द्रियौ सन्तौ प्रजया अमृतेन, प्रजारूपेणामृतेन 'प्रजामनु प्रजायसे तदु ते मर्त्यामृतम्' इति श्रुते। इह गृहस्थाश्रमे स्थितौ गच्छतम्, केवलोऽप्ययं गमिः सम्पूर्वस्यार्थे द्रष्टव्यः, सङ्गच्छतं संगतौ भवतम् ॥

अहमिति ॥ अहं ओषधीषु गर्भमदधां दधामि, श्रौतस्मार्तकर्मानुष्ठानद्वारेण । 'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टि र्वृष्टेरन्नं ततः प्रजाः' इति । अहमेव विश्वेषु भुवनेषु अन्तः अवस्थित परमात्मद्वारेण स्वरूपेणवा । एवंभूतः अहं पितॄणां अर्थाय प्रजा अजनयं जनयामि । अहमेव जनिभ्यः जन्याः अस्याः वध्वाः अवरीषु अवरासु पश्चात् कालभाविनीषु स्नुषासु पुत्रान् जनयामि ।

अत्रापरे प्रत्यवतिष्ठन्ते । नानेन वचनेनर्तुमतीविवाहं प्रतिषेधतीति अभ्युपगन्तुं प्रभवामः । कन्याशब्दो हि विवाहरहितामेव केवलं स्त्रियमाचष्टे । तथा चाह श्रीमान् माधवाचार्यः—'लोकप्रसिद्धस्तु कन्याशब्दो विवाहरहितस्त्रीमात्रमाचष्टे' इति । नन्वेवम् 'ननु ऋतुमत्यां कन्याशब्दः कथं प्रयुक्तः' इति माधवाचार्याणामेव शंकाग्रन्थो नोपपद्यते । नैष दोषः; पूर्व पक्षोक्तिर्ह्येषा, न पुनः सिद्धान्तवचनम् । अत एवानन्तरं शास्त्रेषु विविधार्थेषु प्रयुज्यते कन्याशब्दः, तेषामविरोधाय कन्याशब्दः विवाहरहितस्त्रीमात्रमाचष्टे इत्यभ्युपगन्तव्यमिति माधवाचार्या अब्रुवन् । एतेनायं शब्दः बालिकास्वेव रूढ इति परास्तम् । अत एव भगवान् पतञ्जलिः—'या चेदानीं प्रागभिसंबन्धात् पुंसा सह संप्रयोगं गच्छति तस्यां कन्यांशब्दो वर्तत एव' इत्यब्रवीत् 'कन्यायाः कनीन च' इत्यत्र । आचार्योऽपि कैयटः एवमेव प्राह । तस्माद्विवाहितायामेव कन्याशब्दः प्रयुज्यत इति शास्त्रविदां मर्यादा । अत एव 'असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे' इति, 'ऋतुस्नाता तु या शुद्धा सा कन्येत्यभिधीयते' इत्यादिशल्यपर्वोमामहेश्वरसंवादादिवचनजातं संगच्छते । तस्मात् विवाहरहितस्त्रीमात्रे कन्याशब्दं प्रायुङ्क्त भगवान्

मनुरित्यकामेनाप्यभ्युपगन्तव्यमिति ॥

अत्राभिधीयते— नायं कन्याशब्दः सामान्येन प्रयुज्यमानः ऋतुमतीमपि गमयितुमीष्टे ; बालिकास्वेव तत्पदरूढेः । अत एवाहामरसिंहः— 'कन्या कुमारी गौरी तु नग्निका नागतार्तवा' इति । अत्र गौर्यादयस्त्रयः शब्दाः अनागतार्तवां ब्रुवन्तीति रामाश्रमिणां व्याख्या । अतस्तत्पूर्वं श्रूयमाणौ द्वावपि कन्याकुमारीशब्दौ बालिकामेव ब्रूत इत्यङ्गीकर्तव्यम् । अत एव तुशब्देन गौर्यादिशब्दत्रयात् व्यवच्छिनत्ति ; उत्तरत्र क्रमप्राप्तान्युवतिवाचकान्शब्दांश्च अनुक्रामत्यमरः 'स्यान्मध्यमा दृष्टरजाः' इति । असति बाधके रूढ्यर्थस्य परित्यागस्त्वन्याय्य इति बालिकामेवाभिप्रेत्य कन्याशब्दं प्रायुङ्क्त भगवान्मनुरिति श्लिष्यते । ननु विवाहरहितायामेव कन्याशब्दः रूढ इति माधवाचार्या अब्रुवन्नित्यवोचाम ; बाढम् , प्रौढ्या अभ्युपगतं तैरिति ब्रूमः । कथम् ? 'कन्या ते प्रासूत सुतम्' इत्यादिलौकिकव्यवहारविरोधात् । न चात्रापि कन्याशब्दः अविवाहितां स्त्रियमाचष्ट इत्यमूढोऽध्यवस्यति ; 'कन्या ते प्रासूत सुतम्' इति परेणोच्यमानं श्रुत्वा कश्चित्पिता प्रमोदमधिगच्छति । यद्यविवाहिता ह्यात्मीया दुहिता सुतमसूत इति शृणोति,

विषादमेवायं गच्छतीति प्रसिद्धं लोके। तस्मादभियुक्तैरात्मी-
यासु दुहितृषु दुहितृकल्पासु वा कन्याशब्द: लोके प्रयुज्यत
इत्येवाङ्गीकर्तव्यम् । एवं हि 'असंस्कृताया: कन्याया:'
इत्यादिबहुवचनानि संगच्छन्तेतराम् । अपि च 'ऋतुस्नाता
तु या शुद्धा सा कन्येत्यभिधीयते' इत्यत्र कन्या-
शब्द: कथमविवाहितामाचष्ट इत्यवेदी: । विवाहितास्व-
पीयं परिभाषा संगच्छते । न च शुद्धेत्यनेनाविवाहि-
तेति वक्तव्यम्, प्रमाणाभावात् । माधवाचार्यास्तु ऋतु-
मत्यां कन्याशब्द: न संगच्छतइति विवदमानं पूर्वपक्षिणं
प्रति नायमेकान्त: यद्बालिकायामेव कन्याशब्द: प्रयुज्यत
इतीत्येव प्रतिपादयितुं प्रवृत्ता: प्रौढिवादेनाभ्युपगच्छन्तीति
ब्रूम: । बालिकायां तु रूढोऽयं कन्याशब्द: अन्यत्रापि गौ-
णतया प्रयुज्यते । यदपि महाभाष्योदाहरणम्, तदपि गौ-
णतया अविवाहितासु वर्तत इति ब्रूम: । अत एव भाष्य-
व्याख्यानावसरे कैयटोऽपि— 'अन्ये त्वाहु:— मुनिदेवता-
माहात्म्यात् या पुंयोगेऽप्यक्षतयोनिर्भवति' इत्युक्त्वा तत्र
कुन्तीचरितमुदाजहार । अत्राक्षतयोनि: अप्राप्तरजस्का एव
भवितुमर्हति, न पुनरस्पृष्टमैथुना । 'या पुंयोगेऽप्यक्षतयोनि:'
इति विरोधात् । यदि पुंयोग: कथमस्पृष्टमैथुना स्यात्; तस्मा-

दक्षतयोनिं अप्राप्तरजस्कामेवाभिप्रैति कैयट इत्यभ्युपगच्छामः। अपि चोदाहरणे कुन्तीचरितं निर्दिशति । तत्रैवं श्रूयते महाभारते— 'संत्यज्य भयमेवेह क्रियतां संगमो मम (आदिपर्व)' इत्यब्रवीत् भगवानादित्यः । प्रतिवचनमपि तस्याः वैशंपायन एवमाह— 'सा तु नैच्छत् वरारोहा कन्याहमिति भारत' (आदिपर्व) इति । कथमत्र कन्याशब्दस्याविवाहितेत्यर्थः संगच्छेत । न हि विवाहिता अन्येन संगता न प्रत्यवैतीत्यभ्युपगन्तुं प्रभवामः; प्रमाणविरोधात् । अविवाहिता च प्रथममादित्येनोढा न कस्याप्युपहासास्पदं गच्छति । अपि च 'क्रियतां संगमो मम' इति वदन्तमादित्यं 'कन्याहं' इति प्रत्यब्रवीत् । तत्र नाहमुपभोगयोग्यास्मीत्येवार्थेऽभ्युपगते संगच्छते । अपि चोपरिष्टात् यथापुरं तव कन्यात्वं प्रापयामीति प्रलोभ्य तामुपभुक्तवानिति श्रूयते । तत्र कथं भवत्पक्षमनुकूलयेत । अविवाहितां त्वां करोमीत्यर्थकल्पनमसमञ्जसमेव स्यात् । तस्मादत्र भारते श्रूयमाणः कन्याशब्दः ऋतोः प्राचीने वयसि वर्तमानामेव स्त्रियं सम्यगाचष्ट इत्यभ्युपगन्तव्यम् । अमुमर्थमुदाहरन् कैयटोऽपि अक्षतयोनिशब्देनर्तोः प्राचीने वयसि स्थितामेवाभिप्रैतीत्यङ्गीकर्तव्यम् । ननु साहसमेतत्; मेधातिथि-

प्रभृतिभिरक्षतयोनिरस्पृष्टमैथुनेति व्याख्याततत्वात् । नैष दोषः । नावश्यंमेधातिथिव्याख्यानेनास्पृष्टमैथुनेत्यर्थः संपद्यते । 'अक्षतयोनिग्रहणं पुनर्विवाहेन पत्नीत्वमाशङ्कमानं निवर्तयति, सहोढजकानीनमातृणां च' इत्येव सोऽब्रवीत्। स्पष्टमनेनाक्षतयोनिशब्दं परिभाषां मन्यते मेधातिथिराचार्य इत्युत्पश्यामः । द्वित्राणि व्याख्यानानि मुक्त्वा अन्यत्र स्पष्टतया अस्पृष्टमैथुनेत्यर्थवर्णनस्यादृष्टत्वात् । अस्तु वा तथा वर्णनं सर्वत्र, तथापि तादृशोऽर्थो गौण इति ब्रूमः । अक्षतयोनिशब्दस्तु शक्त्याऽप्राप्तरजस्कायामेव वर्तते । क्षते हि शरीरे शोणितनिर्गमो दृष्ट इति शोणितप्रसृतिलक्षणेन क्षतयोनिशब्दस्य प्रवृत्तेः । तदभावेनाक्षतयोनिः स्त्री भवतीति क्वचिद्वयोविशेषावस्थायां नियम्यते शास्त्रेषु । एतेन वृद्धायामपि कदाचिदक्षतयोनिशब्दः प्रसज्येतेति मन्दशंकापि परास्ता । क्षतयोनेः प्रायेण पुरुषसंपर्को भवतीति क्षतयोनिः स्पृष्टमैथुना, अक्षतयोनिः पुनरस्पृष्टमैथुनेत्यर्थकल्पनं व्याख्यानेषूपलभ्यमानं गौणमेव भवितुमर्हति । तस्मादप्राप्तरजस्का भवत्यक्षतयोनिरित्यत्र न कापि क्षतिः । सर्वथापि तु कन्याशब्दः अप्राप्तरजस्कायामेव मुख्यतया वर्तते, गौणतया त्वन्यत्रेति अवश्यमङ्गीकर्तव्यम् । पराक्रान्तं चैतत्सूरिभिर्व-

योनिर्णये । आस्तां तावदिदम् । अनुसरामः प्रकृतम् । किमभिप्रेत्य कन्याशब्दं प्रायुङ्क्त भगवान्मनुरिति विचारयामः । बालिकामप्राप्तरजस्कामेव मनुरभिप्रैतीति ब्रूमः । तथा हि— यदि कन्याशब्दस्याविवाहितेत्यर्थः गृह्येत 'नाकन्यासु कचिन्नृणाम्' इति वाक्यशेषो नोपपद्येत । अकन्यासु विवाहितासु पाणिग्रहणिका मन्त्राः प्रतितिष्ठन्ति वा न वेति शङ्काया एवानुदयात् अन्याय्यत्वाच्च तादृशशङ्कायाः । व्यर्थमेव स्यादिदं वचनं भवदीयार्थस्याङ्गीकारे । गान्धर्वविवाहे मन्त्रतः पुनर्विधानं शास्त्रेषु दृष्टमिति न तन्निवारणायेदं वचनमिति प्रत्यवस्थातव्यम् । तस्मादविवाहितां स्त्रियं द्वेधा विभज्य कासांचिन्मन्त्राः प्रतितिष्ठन्ति अन्यासां तु न सन्तीत्यर्थं मनसि निधाय 'कन्या' 'अकन्या' इति शब्दद्वयं प्रयुङ्क्ते । अविवाहिता पुनर्नार्यप्राप्तरजस्का प्राप्तरजस्का चेति द्विधैव भवितुमर्हति । नन्वप्राप्तरजस्का भवत्यकन्या प्राप्तरजस्का तु कन्येति कल्पयामः । नैतन्न्याय्यम्, प्रमाणाभावात् विरोधाच्च । पराक्रान्तं चैतत्प्रथममेवामरविचारे । तस्मादकन्या प्राप्तरजस्कैव भवितुमर्हति । अपि चेदं वचनमष्टमाध्याये दण्डप्रकरणे श्रूयते । तत्र पूर्वं 'अकन्येति तु यः कन्यां ब्रूयात् द्वेषेण मानवः । स शतं प्राप्नु-

याद्दण्डं तस्या दोषमदर्शयन् । ( मनु ८। २२५ )' इत्याह । अत्र कुल्लूकः 'नेयं कन्या क्षतयोनिरियमिति यो मनुष्यो द्वेषेण ब्रूयात्' इति व्याचख्यौ । अनन्तरम् 'युक्तश्चास्या-कन्येतिवादिनो दण्डः, यस्मात् इति 'पाणिग्रहणिका' इति श्लोकमवतारयति । नचात्र पूर्वश्लोके अकन्या कन्याभिन्ना विवाहितेत्यर्थः संगच्छते 'क्षतयोनिरियम्' इति व्याख्या-विरोधात् । न हि क्षतयोनिर्नाम विवाहितेति क्वापि उभाभ्या-मप्यावाभ्यामभ्युपगतम्; क्षतयोनिः स्पृष्टमैथुनेति भवताभ्यु-पगतत्वात्, अन्तरेणापि विवाहं स्पृष्टमैथुनायां क्वचिच्छास्त्रेषु कन्याशब्दस्य प्रयुक्तत्वाच्च । कथमत्र सा अकन्या भवितुम-र्हति । अथाकन्या कन्याभिन्ना स्पृष्टमैथुनेत्यभ्युपगच्छसि प्र-तिज्ञाविरोधस्ते प्रसज्येत, अस्पृष्टमैथुनायामेव कन्याशब्दस्य नियमेन भवता अनभ्युपगतत्वात् । अथेदानीमेवमङ्गीकरोमीति ब्रूषे, स्पृष्टमैथुनायामप्ययं शब्दो वर्तत एवेति महाभाष्यवचनं प्रतिकूलमेव स्यात् भवताम् । तस्मादन्यथानुपपद्यमानमिदम-कन्यापदं कुल्लूकभट्टरीत्या प्राप्तरजस्कामेव लक्षयति । क्षतयो-निश्च प्राप्तरजस्कैवेत्यपि कुल्लूकस्याभिप्राय इत्यप्यङ्गीकर्तव्य-म् । तस्मात् 'अकन्येति तु यः कन्याम्' इत्यत्राकन्यापदमृ-तुमतीमेव ब्रूयात् । अपि चोत्तरश्लोके 'लुप्तधर्मक्रिया हि ताः'

इति वाक्यशेषः कथमुपपद्येत यद्यकन्या नाम विवाहिता स्यात्। ननु सा स्पृष्टमैथुना स्यात्; एवं हि लुप्तधर्मक्रियाभवितुमर्हति। न; विवाहात् स्पृष्टमैथुनायां धर्मलोपाभावात्। अथमतमन्तरेण विवाहं स्पृष्टमैथुना अकन्येति, तदपि न संगच्छते। स्पृष्टमैथुनायामपि तादृश्यां कन्याशब्दः वर्तत एवेत्यधस्तात् प्रपञ्चितत्वात्। तस्मादस्मदुक्त एवार्थः परिग्राह्यः। अकन्या हि प्राप्तरजस्का लुप्तधर्मक्रिया भवति, अतः अप्राप्तरजस्कामतथाभूतेयमिति दूषयन् तस्याः विवाहसंस्कारं प्रतिषिध्य श्रेयोद्वारमेव बाधत इत्यवश्यमसौ पुरुषो दण्डमर्हतीत्येव सुतरां प्रतिपादयति मनुरिति अकामेनाप्यभ्युपगन्तव्यम्। तस्मात् सिद्धमृतुमतीविवाहः शास्त्रतः प्रतिषिध्यते, कन्याया एवर्तोःप्राचीने वयसि वर्तमानाया विवाहो विधीयत इति च। पराक्रान्तं चात्र परेषां मतं बहुधा प्राचीनैः। तथापि केचिन्न्यायाभासयुक्त्याभासवाक्याभासावष्टम्भाः शास्त्राणामन्यथाभावं वर्णयन्तोऽपार्थकल्पनेन सर्वमपि लोकमाकुलीकुर्वन्ति। तत्र वैदिकमार्गे बद्धश्रद्धैस्तत्परिरक्षणं यथाशक्ति कर्तव्यमिति न्यायमेकमेवावलम्ब्य अस्थानर्थहेतोः प्रहाणाय सम्यगर्थनिर्धारणाय च प्रवृत्ताः तेषां यद्व्याख्यानं तद्व्याख्यानाभासं न सम्यग्व्याख्यान-

मित्यस्यां परिणयमीमांसायां प्रदर्शयिष्यामः ॥

तत्र तावत् वैवाहिकमन्त्रास्तात्पर्यतो विचार्यमाणाः रजस्वलोद्वाहमेवोपस्थापयन्तीति पूर्वपक्षी प्रत्यवतिष्ठते । तथा हि— 'अघोरचक्षुः' इत्यादिमन्त्रे वध्वाः सौमनस्यादिकमभिधीयते । तच्च वध्वाः युवतिभावमेव गमयति, अतथाभूतायां सौमनस्यादिकामनाया असंभवात् । तथा 'जीवाँरुदन्तिविमयन्ते' इति मन्त्रे स्पष्टमेवालिङ्गनमुच्यते । तदपि युवतिभावमेवोपोद्बलयति । 'शं ते हिरण्यम्' इत्यादिमन्त्रे 'मया पत्या तन्वंसंसृजस्व' इत्यत्र पतिशरीरसंसर्ग उच्यमानः दृढमेवर्तुमत्या एव विवाहं गमयति । 'सखा सप्तपदा भव' इति मन्त्रे ऋक्सामद्युपृथिव्यादिदृष्टान्तपूर्वकमत्यन्तकामिनोर्यूनोर्नर्मसंलापवत्परस्परसख्यं स्त्रियं प्रति बहुप्रपञ्चमभिधीयते वरेण । किमितोऽप्यन्यद्गवेषणीयं वध्वाः युवतिभावं व्यवस्थापयितुम् । एवमन्यान्यपि यथासंभवं मन्त्रलिङ्गानि द्रष्टव्यानि । ननु स्मृतिषु स्पष्टमेव निषिध्यते रजस्वलाविवाहः । बाढम्, तथापि पौरुषेयस्मृत्यपेक्षया मन्त्रलिङ्गान्येव बलवन्ति भवन्ति अपौरुषेयत्वात् । अतः 'विरोधे त्वनपेक्षम्' इति न्यायेन वैदिकलिङ्गप्राबल्यमङ्गीकृत्यर्तुमतीविवाह एव शास्त्रीय इत्येवं प्राप्ते,

ब्रूमः ; नर्तुमतीविवाहः शास्त्रीय इति । कस्मात्? स्मृतिषु निषिद्धत्वात् ; नन्वस्ति मन्त्रलिङ्गमित्यवोचाम ; बाढमवोचः, नैतन्न्याय्यं पश्यामः, लिङ्गाभावात् । सामर्थ्यलक्षणं हि लिङ्गम्, न पुनर्यत्किंचिच्छब्दश्रवणम् । तथा चावोचन् सर्वतन्त्रस्वतन्त्राः श्रीमन्तो वाचस्पतिमिश्राः भामत्याम्— 'अस्यैन्द्री ऋगित्यारभ्य, 'अत्र हि सामर्थ्यलक्षणाल्लिङ्गादिन्द्रे विनियोगः प्रतिभाति' इति 'वेधाद्यर्थभेदात्' (ब्र. ३. ३. १५.) इत्यधिकरणे । 'कदाचन स्तरीरसि' इत्यादिमन्त्रे मघवेन्द्रशब्दाभ्यामिन्द्रएव विनियोगः गम्यते । तथा 'इमं मे वरुणश्रुधीहवम्' इत्यत्रापि वरुण एवोपस्थेय इति । एवमिहापि सामर्थ्यलक्षणमृतुमतीबोधकं लिङ्गं नोपलभामहे । न हि सौमनस्यादिकं युवतिमेवाव्यभिचरितसंबन्धेनोपस्थापयेत् जुह्वादिवत् ; बालिकास्वपि संभवात् । आलिङ्गनमपि श्रूयमाणं नर्तुमतीमुपस्थापयति । नैतदालिङ्गनं संभोगाय, अपि तु वियोगमसहमानान्बन्धुजनान्प्रति सादरमिमां परिगृह्णामि परिपालयामि च, मा विषादं गच्छन्तु भवन्त इति बोधयितुमेव । अपि चायं मन्त्रस्तत्वतो विचार्यमाणः नालिङ्गनं विधत्ते । 'ये बन्धुजना वध्वाः परिष्वङ्गाय पर्याप्तं विवाहं प्रवर्तितवन्तस्ते मा

रुदन्तु ' इत्येव मन्त्रार्थो भवति । तस्मान्नैतल्लिङ्गं भवितुमर्हति । ' शं ते हिरण्यम् ' इत्यत्रापि श्रूयमाणः वध्वाः पतिशरीरसंसर्गः न तात्कालिकं वध्वाः युवतिभावं गमयति, संभोगकाले संसर्गस्य तत्र विवक्षितत्वात् । ननु संनिहित एव काले चतुर्थदिने समावेशनस्य विधानादत्रर्तुमतीत्वमवश्यमभ्युपगन्तव्यमिति यद्युच्येत, तर्हि तदेवात्रलिङ्गमिति पूर्वपक्षः कर्तव्यः, नत्वनेन मन्त्रेणेत्यागतम् । उपरिष्टाच्चोन्मथिष्यामश्चतुर्थीसमावेशनमतम् । तस्मान्नानेन मन्त्रेणर्तुमतीविवाहः सिध्यति ॥ ' सखा सप्तपदा ' इति मन्त्रे नर्मवचनेन स्त्रीपुंसोः सख्यमेव अविच्छिन्नं कीर्त्यते न पुनर्युवतिभावोऽपि ; ' रेतोभृत्त्वम् ', ' सामाहमस्मि ', ' वाक् त्वम् ', इत्यादिषु स्त्रीलिङ्गपदैः स्त्रीत्वमेव वध्वाः अभिधीयते, कथमेतावता ऋतुमतीत्वमपि तस्याः अवगम्येत ; शब्दानां तादृशार्थबोधने सामर्थ्याभावात् । तस्मात् नानेनापि मन्त्रेणर्तुमतीविवाहः शास्त्रीयः संपद्यते ॥

स्यादेतत् । अस्ति चायमपरो मन्त्रः, यः स्पष्टमेवर्तुमतीविवाहमुपक्षिपति ' सोमः प्रथमो विविदे ' इत्यादिकः । तत्र हि ' तुरीयस्ते मनुष्यजाः ' इति श्रूयते ; तत्पूर्वमग्निः पतिरिति च । अग्नेः पतित्वं तु रजःप्रादुर्भावकाल एव, ' रजस्यग्निः

प्रतिष्ठितः' इति स्मृतिवचनात्। तस्माद्रजसोऽनन्तरं स्त्रीणां विवाहः शास्त्रीयो भवतीति। एवं प्राप्ते, ब्रूमः— नानेन मन्त्रेणर्तुमतीविवाहो गम्यते। अत्र हि सोमगन्धर्वादीनां पतित्वमेव केवलं श्रूयते न पुना ऋतुमतीत्वमपि वध्वाः। ननूक्तम् 'रजस्यग्निः प्रतिष्ठितः' इति स्मृतिवचनमस्तीति; सत्यम्, तथापि स्मृत्यानुगृहीतोऽयमृतुमतीविवाह इति हि वक्तव्यम्, न तु श्रौतं लिङ्गमस्तीति। कथं पुनरेवमुच्यते। न वयं सर्वथा स्मृतिमनादृत्य श्रुतिमेकामेव प्रमाणीकुर्मः; यथासंभवं स्मृत्यनुसारेणापि श्रुत्यर्थः परिग्राह्यः इत्येवातिष्ठामहे। तस्मात् अस्ति श्रौतं लिङ्गमिति चेत्, तर्हि श्रौतलिङ्गस्य प्राबल्यं कथमेकान्तेन भवताऽभ्युपगन्तुं शक्यते। स्मृतिमप्यनुसरति श्रुतिरिति आः कष्टमसंमतोऽयं पन्थाः शिष्टानामिति हि त्वदीया ब्रूयुः। तस्मान्नात्र श्रौतं लिङ्गं पश्यामः। अथापि भवतः श्रद्धामनुरुद्ध्य स्मृतिमभ्युपगच्छामः श्रौतलिङ्गप्रसिद्ध्यै, एवमपि न दोषाद्विनिर्मोक्षः। तथा हि, समानप्रकरणे संवर्तस्मृतौ सोमगन्धर्वादीनां कालमभिधायैवं वाक्यशेषः श्रूयते— 'तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत्' इति। अत्र यावदृतुमती भवेत् तावन्नोद्वाहयेत् इत्यर्थकल्पनमनवबोधविजृम्भितमेव स्यात्; यथाश्रुतिगृहीतार्थभङ्गप्रसङ्गात्। न च पूर्व

वाक्यस्यार्थवत्तासिद्धयै एवमस्यार्थवर्णनं न्याय्यमिति प्रत्यव-स्थातव्यम् । कन्याप्रदानकालस्योपक्रमेऽनवगतत्वात् । न चामति बाधके यथाश्रुतिगृहीतार्थभङ्गः कर्तव्य इति निरूपितं शास्त्रदीपिकायां पर्णमय्यधिकरणे । तस्मान्न सर्वात्मनानेन मन्त्रेणर्तुमतीविवाहः सिध्यति । पराक्रान्तं चात्र निपुणतरं सूरिभिर्वयोनिर्णये । तस्मान्नर्तुमतीविवाहः शास्त्रीय इति ॥

एवं परिहृतेऽप्यस्मिन्मन्त्रे पुनरन्यस्मान्मन्त्रात्पूर्वपक्षी प्रत्यवतिष्ठते । 'उप मामुच्चा युवतिर्बभूयाः' इति मिथः समीक्षणे विनियुज्यते । अस्याऽयमर्थः— 'हे युव-तिः संभोगकाले उपरि सन्तं मामनुभूयाः' इति । न चात्र वध्वाः अभ्यनुज्ञैव दीयते इति वक्तव्यम् । सामर्थ्यलक्षण-मप्यस्ति लिङ्गं वध्वाः ऋतुमतीत्वबोधकम् 'युवतिः' इति संबोधनश्रवणात् । युवतिशब्दस्तु प्राप्तरजस्कायामेव रूढः ।' ननु उपक्रमे तावल्लाजहोममन्त्रः एवं श्रूयते— 'अर्यमणं नु देवं कन्या अग्निमयक्षत' इति । कन्याशब्दस्यात्र श्रवणात्तस्य चाप्राप्तरजस्कायामेव रूढत्वात् उपक्रमाधि-करणन्यायेनोपरि गतो युवतिशब्द एव तदनुरोधेन ने-तव्य इति । नेति ब्रूमः । कथम्? युवतिपक्षोपो-द्बलकानि बहूनि लिङ्गानि दृश्यन्ते । पूर्वम् 'अपश्यं

त्वा मनसा दीध्यानां ( दीप्यमानां ध्यायन्तीं वा ) स्वायां तनूमृत्विये नाथमानाम् ' इति श्रूयते । अत्र गर्भं प्रार्थयमानामित्यर्थः । उत्तरत्रापि 'प्रजापते तन्वं मे जुषस्व' इत्यादिकः पठ्यते । तत्र 'या न ऊरू उशती विस्रयातै यस्यामुशन्तः प्रहराम शेफम्' इति स्पष्टमेव मैथुनाय प्रार्थना दृश्यते । सर्वमिदं युवतिशब्दार्थमेवोपोद्बलयति । ननु जपे खलु 'प्रजापते' इत्यादेर्विनियोगः । अपि च प्रार्थना खल्वेषा । सा चानृतुमत्यामपि कालान्तरं संभाव्येत । नेति ब्रूमः । यद्यपि विनियोगो भवति जपे तथापि स्वनिमित्ताश्रयाद्यर्थप्रकाशकत्वमपि संभवति मन्त्रस्येति निरूपितमस्मदीयैरभियुक्तैः विमर्शे । अत एव 'क्षीरिणामन्येषां वा लक्ष्मण्यानां वृक्षाणां नदीनां धन्वनां च व्यतिक्रमे उत्तरे यथालिङ्गं जपति' (आ. गृ. ६–५.) इत्यब्रवीदापस्तम्बः । अत एव 'तीर्थस्थाणुचतुष्पथव्यतिक्रमे चोत्तरां जपेत्' (आ. गृ. ५. २६) इत्यत्र एवमेव व्याचख्यौ सुदर्शनाचार्यः । तस्मादत्रापि जपे विनियुक्ते मन्त्रे ह्यस्त्येव लिङ्गं युवतिभावमुपोद्बलयत् । यद्यपि उपक्रमस्य प्राबल्यं, तथापि उपक्रमस्थमेकं लिङ्गमुपरितनानेकगुणविरोधे दुर्बलमिति प्रपञ्चितमुत्तरमीमांसायां दहराधिकरणे (ब्र. १. ३. १४).

तस्माद्दहराधिकरणन्यायेनोपसंहारमनुसृत्यैवोपक्रमगतः कन्याशब्दः कथंचिन्नेय इति। एवं प्राप्ते ब्रूमः— नैतदेवमिति। न ह्युपसंहारे सन्ति बहूनि लिङ्गानि। न हि ऊरुशेफप्रभृतीनां शब्दानामेव श्रवणमात्रेणर्तुमतीत्वं वध्वाः अध्यवस्यन् भवति श्लाघनीयप्रज्ञः, कन्यास्वपि मन्त्रार्थस्य संभवात्; प्रार्थनात्मकत्वात् च क्रियापदानाम्। यथाहुः— 'अनेनैव प्रार्थनेन विवाह्यामतथाविधाम्। अप्रौढां गमयन्ती सत्यनुगृह्णाति च स्मृतीः' इति। ननु मन्त्राणां स्वनिमित्ताश्रयाद्यर्थप्रकाशकत्वमप्यस्ति भगवतापस्तंबेन तथोक्तत्वादित्यवोचाम। बाढम्। तदसङ्गतमिति ब्रूमः। आपस्तंबेन तथा नोक्तत्वात्। तथा हि 'तीर्थस्थाणुचतुष्पथव्यतिक्रमे' इति सूत्रे श्रौतलिङ्गापेक्षया स्मार्तश्रुतेः प्राबल्यं प्रसाध्य विनियोगविध्यनुसारेण मन्त्रलिङ्गानि कथंचिन्नेयानि इति निरूप्य 'न्यायतस्तु जपमन्त्रो नार्थपरः' इत्यन्ततो न्यरूपयच्छ्रीमान् सुदर्शनाचार्यः। 'क्षीरिणाम्' इत्यत्र तु लिङ्गाद्विनियोगविधिमभ्युपगच्छति, न पुनर्लिङ्गादेव सर्वत्र विनियोगविधिरभ्युपगन्तव्य इति वा मन्त्रार्थानुसारेणैव विधेरप्यर्थोऽङ्गीकर्तव्य इति वा प्रतिपादयति, येन श्रीमतामभीष्टः सिध्यति। अपि च 'न्यायतस्तु जपमन्त्रो नार्थपरः' इति

वदन् सुदर्शनाचार्यः विध्यनुसारेणार्थवत्वं मन्त्राणामभ्युपगच्छति न पुनर्विपरीतम् । तस्मात् 'प्रजापते तन्वं मे' इति मन्त्राणां जपे विनियुक्तत्वात् न तात्कालिकीं प्रौढावस्थां ते बोधयेयुः, कन्यास्वपि कालान्तरे संभवात् । तस्मान्नैतान्युपोद्बलकानि भवन्ति लिङ्गानि । अतः उपसंहारे बहुलिङ्गप्रतिज्ञा मृषैव भवतीति उत्सर्गप्राप्तमुपक्रमप्राबल्यमङ्गीकृत्यैव युवतिशब्दः सामान्यतः स्त्रीवाचक इति नेतव्यः । अपि चोपक्रमे 'कन्यलापितृभ्योयती' इत्यत्रापि कन्याशब्दो दृश्यते । तस्मान्नानेन मन्त्रेणर्तुमतीविवाहः सिध्यति । एतेनेतरे मन्त्रा व्याख्याता वेदितव्याः । अत एव सर्वज्ञशिखामणिर्भगवान्मनुः 'पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः' इत्यब्रवीत् । तस्मान्नास्ति क्वापि मन्त्रलिङ्गं यद्बलेनर्तुमतीविवाहः शास्त्रीयः स्यादिति सिद्धम् ॥

अवसितः श्रुत्यर्थविचारः । इदानीं गृह्यसूत्राणि विचारयामः । तत्र तावद्भगवानापस्तम्बः 'शेषं समावेशने जपेत्' इत्याह । किमनेन सूत्रेण भगवान चतुर्थदिने समावेशनं विदधात्याहोस्विन्नेति वादिविप्रतिपत्तिदर्शनात् विचारयामः । किं तावत्प्राप्तम्, विदधातीति; कस्मात्? प्रमाणोपलम्भात् । तथाहि— 'तं चतुर्थ्यापररात्र' इत्यारभ्य संस्कारजातं वि-

धायेदं पठति 'शेषं समावेशने जपेत्' इति । तस्मादुत्प- श्याम: चतुर्थ्यां विधीयते समावेशनमिति । ननु 'समावे- शने' इत्येव पठ्यते । तथा च तस्मिन्काले जपेत् इति फलति । समावेशनं तु किं केन कथमित्यादिकं ना- त्रोपलभ्यत इति चेत्, न; उत्तरत्र 'रजसः प्रादु- र्भावात् स्नातामृतुसमावेशने' इति श्रुतात् ऋतुलि- ङ्गात् समावेशनं नाम वध्वा सह मैथुनार्थं शयनमिति सुदर्शनाचार्येण व्याख्यातत्वात् । तर्हि उपरिनिर्दिश्यमानमे- वर्तुसमावेशनमत्रापि प्रत्यभिज्ञाप्यते शब्दैक्यादिति तदनुवा- देन जप एव केवलमत्र विधीयते इति अभ्युपगच्छामः । नैवं शक्यतेऽभ्युपगन्तुं, तत्रर्तुसमावेशनस्य विधानाभावात् । नन्वत्रापि विधिं नोपलभामहे । बाढम् । 'अनुपलभमाना अपि त्वनुमास्यामहे सन्निधिसामर्थ्यात् । 'तं चतुर्थ्यापर- रात्रमुत्थाप्य' इत्यादिकर्मजातं विधाय हि प्रकरणे तस्मिन्निदं पठ्यते 'शेषं समावेशने जपेत्' इति । तद्धि समावेशनकर्म- कालं कमप्यपेक्षते; अपेक्षितं च कालं प्रकरणं समर्पयति । तस्माद्यथा 'समिधो यजति' 'तनूनपातं यजति' इत्यादीनि प्रयाजादीनि कर्माणि दर्शपूर्णमासप्रकरणे पठितानि तयोरङ्ग- भावं प्रतिपद्यन्ते । एवं समावेशनकर्मापि शेषहोमप्रकरणे

पठितं सदस्याङ्गभावं प्रतिपद्य चतुर्थदिनापररात्र एवात्मानं लभते । ननु ‘समावेशने’ समावेशनकाले इत्येव तस्यार्थः, तथा व्याख्यातत्वात् सुदर्शनाचार्येण; न पुनः समावेशनकर्मणीति । नैष दोषः । कालार्थपरिग्रहेऽपि सोऽयं कालः कदेति शंकायां प्रकरणबलेन चतुर्थदिनस्यैवाक्षिप्यमाणत्वात् । तर्हि ऋतुसमावेशनं नास्तीत्यागच्छेत् । न । तत्रापि विधेः कल्पनीयत्वात् । तर्हि कर्मभेदः स्यात्; तच्चायुक्तमभ्युपगन्तुं शब्दैक्येनैककर्मत्वाध्यवसायादित्यवोचाम । न । शब्दैक्याभावेन प्रत्यभिज्ञाभावात् । अत्र हि ‘समावेशने’ इति पठ्यते, तत्र तु ‘ऋतुसमावेशने’ इति । कथमनयोरैक्यं स्यात् । तस्मात् कर्मभेदोऽभ्युपगन्तव्यः । अत एव सुदर्शनाचार्यः ‘एतच्च रागप्राप्तसमावेशनाश्रितं विवाहकर्मार्थं क्रमजपयोर्विधानम्; यथा भोजनपर्यायव्रताश्रितं पयआदिविधानम्’ इति ब्रुवन् सर्वनाम्नैतच्छब्देन रागप्राप्तमित्यनेन चेदं समावेशनमृतुसमावेशनादन्यत् रागतः प्राप्तत्वाच्च न विधानमर्हति चेति स्पष्टं न्यरूपयत् । ऋतुसमावेशनं तु नित्यमेव ‘ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां पतते नात्र संशयः’, इति पत्नीगमनस्य नियमेन विधानात् । ‘यथा भोजनपर्यायव्रताश्रितं पयआदिविधानमिति दृष्टा-

न्तोऽपि अस्मत्पक्षमेवानुकूलयति । तथा हि— दीक्षितस्य पयोविधानं भोजनपर्यायव्रताश्रितम्; भोजनं च रागप्राप्तम् । यदि रागो न स्यात् लुप्यत एव भोजनं तत्पर्यायं व्रतश्च । तत्र पयआदेः प्रसक्तिरेव नास्ति । ततश्चात्र समावेशनमनियतमिति फलति । अनियतत्वाच्चेदं भिन्नमेव भवितुमर्हति, ऋतुसमावेशनस्य नियमेन विधानात् । अत एवोपरिष्टाच्च 'अस्मिन्नेव क्रमे यदि दैवादृतुगमनमपि कर्तव्यं स्यात् तदा पूर्वमारोहोरुमित्यादिजपः ततो विष्णुर्योनिमित्यादिजपः' इत्यब्रवीत् । यद्यत्र समावेशनमृतुसमावेशनमेव स्यात् तर्हि सुदर्शनवाक्ये ह्यपेः स्वारस्यमनादृतमेव स्यात् । अपि चर्तुसमावेशनमेवात्र यद्याश्रयतया विवक्ष्येत तर्हि 'रजसः प्रादुर्भावा' दिति सूत्रारंभो व्यर्थः स्यात् । तस्मादवश्यमत्र समावेशनद्वयमङ्गीकर्तव्यम् । ननु यदि चतुर्थदिने समावेशनमभ्युपगम्येत तस्य प्रयोजनं वक्तव्यम् । किमिदं दृष्टार्थं वोतादृष्टार्थमिति । यदि दृष्टार्थं तर्हि 'रजसः प्रादुर्भावात्' इत्यत्र विधीयमानमनर्थकं स्यात् । अथादृष्टार्थं तदपि न । प्रमाणाभावात् गौरवाच्च । नैष दोषः । अगतिका हीयं गतिः यदत्रादृष्टार्थं चतुर्थदिने समावेशनमभ्युपगच्छामः इति । अन्यथा पृथक्सूत्रारंभो

र्व्यर्थः स्यात् इत्यवोचाम । तस्मात् रागप्राप्तमिदं समावेशनं अनियतमपि अभ्युपगन्तव्यमेव । तस्मात् विधीयत एव चतुर्थदिनापररात्रे समावेशनमापस्तंबेन भगवतेति । एवं प्राप्ते ब्रूमः— नैतदेवमिति । कस्मात् । 'प्रमाणाभावात् तथा हि । 'तिस्रो जपित्वा शेषं समावेशने जपेत्' इति हि सूत्रं भवति । तत्र समावेशने समावेशनकाले जपेत् इति टीकाकारैः व्याख्यायते । सोऽयं कालः कदेति नानेन वचनेन ज्ञायते इत्यतएवोत्तरत्र वक्ष्यमाणं ऋतुपदसमभिव्याहारमादाय ऋतुसमावेशनकालमभिप्रैति सुदर्शनः इति स्पष्टं प्रेक्षावताम् । तादृशं समावेशनमनूद्य जपमात्रमेवात्र विधीयते इति च । कथमत्रानुवादो युज्येत । शब्दभेदात् कर्मभेदाध्यवसायादित्यवोचाम । बाढमवोचः । वाचारंभणमेवैतदित्युत्पश्यामः । शब्दैक्येन प्रत्यभिज्ञानसंभवात् । ननु कथं 'समावेशन' ऋतुसमावेशनशब्दितयोः कर्मणोरेकत्वं स्यात् । नैतत्सङ्गतम् । विभक्तिभेदाभेदौ हि शब्दभेदाभेदप्रतिपादकौ हेतू न पुनर्विशेषणसमभिव्याहारतदभावौ । अत एव 'सर्वत्र प्रसिद्धोपदेशात्' (ब्र. १. २. १.) इत्यधिकरणे 'शारीरस्यात्मनो य शब्दोऽभिधायकः सप्रम्यन्तोऽन्तरात्मन्निति तस्माद्विशिष्टोऽन्यः प्रथमान्तः पुरुषशब्दो मनोमयत्वादिविशिष्टस्यात्मनो-

ऽभिधायकः' इत्यब्रुवन् श्रीमन्तो भगवत्पूज्यपादाः 'शब्दविशेषात्' इत्यत्र। एवमिहापि 'समासवेशने' इति सप्तम्यन्तः पठ्यते। उत्तरत्र 'ऋतुसमावेशने' इति स एव सप्तम्यन्तः विशेषणविशिष्टः पठ्यते। तस्मात् सर्वप्रकारेण शब्दैक्यमपह्नोतुमशक्यम्। अतः उत्तरत्र वक्ष्यमाणमेवर्तुसमावेशनमत्र प्रत्यभिज्ञाप्यत इति अनयोरैक्यं अकामेनाप्यभ्युपगन्तव्यम्। तस्मादृतुसमावेशनमेवानूद्य जपमात्रमत्र विधीयत इत्युत्पश्यामः। यदुक्तं पृथक्सूत्रारंभो व्यर्थ इति, अत्र ब्रूमः। आम्नातस्यार्थे प्रतिपत्तुं प्रभवामो नाम्नातं पर्यनुयोक्तुम्। 'शेषं समावेशने जपेत्' इति वाक्यस्वारस्येनर्तुसमावेशनमेकमेव विधीयत इत्यवगच्छामः, न पुनरपूर्वमत्रापि समावेशनं किमपीति। नन्वनुमास्यामहे संनिधिसामर्थ्यादित्यवोचाम। बाढमवोचः, न युक्त्युपेतमवोचः। 'वेधाद्यर्थभेदात् (ब्र. ३. ३. २५.) इत्यधिकरणन्यायविरोधात्। तत्र हि शारीरकमीमांसायां 'हृदयं प्रविध्य' इत्यादिमन्त्राणां प्रवर्ग्यादिकर्मणां च रहस्यपठितानामपि न सन्निधिबलेन विद्याशेषत्वं संभवति, श्रुतिलिङ्गादिभिः प्रबलप्रमाणैरन्यत्र विनियुक्तत्वात् इति प्रपञ्चितम्। एवमिहापि 'शेषं समावेशने जपेत्' इति समावेशनकर्मणि विनियुक्तस्य जपस्य

कालः समावेशनकाल एव भवितुमर्हति । न च कथं 'समावेशने' इति शब्दः सप्तम्यन्तः सकृदुत्पन्नः समावेशनकर्म ज्ञापयित्वा पुनः समावेशनकालमपि ज्ञापयितुमर्हतीति प्रत्यवस्थातव्यम् । दर्शपूर्णमासयोः तत्प्रख्यन्यायेन कर्मनामत्वेपि पुनः शब्दशक्त्या दर्शपूर्णमासयोः कालावपि लभ्येते इति शास्त्रेष्वङ्गीकृतत्वात् । अत एव 'वर्षे वर्षे तु या नारी कृष्णजन्माष्टमीव्रतम्' इत्यत्र तत्प्रख्यन्यायेन कर्मनामत्वं शब्दशक्त्या कालश्च प्रतिपाद्यते इति प्रपञ्चितं स्मृतिकौस्तुभे । एवमिहापि भवितुमर्हति । तस्मात् 'शेषं समावेशने जपेत्' इति वाक्येन सकृदुत्पन्नेन समावेशनसंबन्धिनि काले विनियुक्तस्य कर्मणः (जपस्य वा) पुनः कथं दुर्बलेन सन्निधिना शेषहोमस्याङ्गभावः प्रतिपाद्येत । तस्मात् प्रकरणपाठावष्टंभेन प्रयाजादिवत्तस्याङ्गभावः संभवतीति भिन्नमेवेदं कर्म स्वकीये कालान्तरे भवितुमर्हति । अथापि भवतः श्रद्धामनुरुध्याङ्गभावं प्रतिपद्यमहि एवमपि 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति वाक्येन विहितस्याङ्गस्य बृहस्पतिसवस्येव वसन्ते कालान्तर एवानुष्ठानं समावेशनस्य न्याय्यं मन्यामहे । परमार्थतस्तु बृहस्पतिसवस्येवाङ्गभावं विदधद्वाक्यं नोपलभामह इति न युष्माकमभीष्टस्य स्यात्

स्वप्रेप्यवकाशः । ननु तर्हि मिथः समीक्षणादीनां भिन्नकर्मणामपि विभिन्नाः कालाः स्युः । न । तेषां कर्मणां कालः कदेति शंकायां सन्निहितेन प्रकरणेन कालस्याक्षेपेण शंकानिवारणस्य संभवात् । इह तु वाक्येनैव बलीयसा स्वकालः समर्प्यत इति न प्रकरणस्यावकाशो दुर्बलस्य । तस्मात् 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यत्रेव 'तिस्रो जपित्वा शेषं समावेशने जपेत्' इत्यत्रापि कालार्थोऽयं संयोग इति मन्तव्यम् । तस्मान्न सर्वात्मना चतुर्थदिनापररात्रे समावेशनं विधीयत इति सिद्धम् । अपि चादृष्टार्थं यद्यत्र समावेशनमभ्युपगम्येत अन्याय्यमेवैतत् स्यात् । दृष्टे संभवत्यदृष्टकल्पनायाः अन्याय्यत्वात् । अपि चादृष्टार्थादस्मात् समावेशनात् कथमृतुमतीत्वमपि वध्वाः प्रतिज्ञायेत । ननु 'समावेशनं वध्वा सह मैथुनार्थं शयनम्' इति सुदर्शनाचार्यव्याख्यानात् परिभाषेति जानीमः । नेति ब्रूमः । 'केचित् असत्यपि रागे' इत्यादिपक्षान्तरोपदेशानर्थक्यात् । गौणतयापि त्वदीयवृद्धैरभ्युपगते बालिकोद्वाहपक्षे परिभाषायाः असङ्गतत्वात् । अथ तदविरोधाय समावेशनमेकत्र मेलनं शयनं वेत्यर्थं अङ्गीकरोषि नात्र चतुर्थीसमावेशनमृतुमतीत्वं वध्वाः नियमेन उपस्थापयति । तस्मात् समावेशनबलादेवर्तुमतीत्वप्रतिज्ञा

मृषैवेति सिद्धम । न्यायतस्तु ऋतुसमावेशनमेवोपरि वक्ष्य माणमत्वानूदितमिति प्रपञ्चितमधस्तात् । तस्मात् सिद्धम न चतुर्थदिने समावेशनं विदधात्यापस्तम्बो भगवानिति ।

यदुक्तं रागप्राप्तत्वाच्चतुर्थीसमावेशनमनियतम , ऋतुसमावेशनं पुनर्नियमेन विधीयत इत्यनयोर्भेद एवाङ्गीकर्तव्य इति, अत्रैवं भवान प्रष्टव्यः । किं पुना ऋतुसमावेशनं रागतः

[illegible]

(२६. पृष्ठे अन्तिमपङ्क्तौ 'उपस्थापयति' इत्यतः परमिदं द्रष्टव्यम )

न च वालिकोद्वाहमपेक्ष्यैकत्र मेलनं शयनं वेत्यर्थः, ऋतुमतीविवाहमपेक्ष्य पारिभाषिकोऽर्थः संगच्छतामिति वाच्यम ; विधिवैषम्यप्रसङ्गेन 'द्वयोः प्रणयन्ति' (जै. ३. ७. २३.) न्यायविरोधात् । न चैवमस्माकं 'समावेशने' इति सप्तम्यन्तस्य युगपत्प्रतीयमानमर्थद्वयमङ्गीकुर्वतां विधिवैषम्यः संभवति, प्रतीयमानार्थस्य परित्यागायोगादिति सुधियो विभावयन्तु ॥

ब्रूषे तर्हि आगतोऽसि मार्गेण । रागप्राप्तो विवाह इत्युक्ते का पुनस्ते क्षतिः । अत एव 'शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा' (याज्ञ. ३. ५७.) इति पारिव्राज्यप्रकरणे 'रागप्रयुक्तत्वाच्च विवाहस्य' इत्युक्तमाचार्येण विज्ञानेश्वरेण । आस्तां तावदिदं । अनुसरामः प्रकृतम् । तस्मादृतुसमावेशनमपि रागप्राप्तमेवेति कथमस्य चतुर्थीसमावेशनात् भेदमुपपादयसि । ननु नियमानियमाभ्यां भेदं पश्यामः । ऋतुसमावेशनं हि नियम्यते न पुनरन्यत् इति । नेति ब्रूमः । कथं पुनश्चतुर्थीसमावेशनमनियतमेवेत्यवेदीः । रागप्राप्तत्वादिति चेत् तर्हि ऋतुसमावेशनमपि रागप्राप्तमिति तत्राप्यनियमोऽभ्युपगम्यताम् । अथ तत्र विधिरस्ति, नात्रैवं वचनमिति ब्रूषे तर्हि समावेशनमेव चतुर्थदिने नास्तीति कथमत्र नियमानियमयोः अन्यतरः संभवेत । पराक्रान्तं चैतत् प्रथममेव । तस्मादृतुसमावेशनमेवात्रानूद्यते इति न्याय्यं पश्यामः । व्याख्यानमप्यस्मत्पक्षमेवोपोद्बलयति इति प्रपञ्चितं वयोनिर्णये । अथापि भवतः श्रद्धामनुरुध्य चतुर्थीसमावेशनमभ्युपगच्छामः एवमपि न सर्वात्मना दोषाद्विनिर्मोक्षः । रागप्राप्तं चतुर्थीसमावेशनमित्यभ्युपगच्छद्भिः कथं चतुर्थदिनापररात्र एव रागः संभवे-

दिति युक्तं वक्तुम् ; पञ्चम, षष्ठ, सप्तमादिषु यदा कदावापि यदि रागः स्यात् तर्हि तत्रैव विवाहकर्मार्थं भवदभीष्टं समावेशनाभासं कृत्वा तत्रैव जपो विनियुज्येत । तस्मात् यत्किञ्चित् पदश्रवणमात्रेण यत्किञ्चित् कल्पनमसत्प्रलाप एवेत्युपेक्षणीयम् । यदप्युक्तं 'अस्मिन्नेव क्रमे यदि दैवादृतुगमनमपि' इत्यत्रापेः स्वारस्यमनादृतमेव स्यादिति, तत्र मौनमेव सुतरां प्रतिवचनं भवितुमर्हति, तथापि ब्रूमः । 'तिस्रो जपित्वा' इत्यादिना निर्दिष्टे क्रमे यदि अतर्कितापनतेन दैवेनर्तुगमनमपि कर्तव्यं स्यात् इत्यर्थः । एतदुक्तं भवति । 'प्रजापते तन्वं मे' इत्यन्तं हि चतुर्थदिनापररात्रकर्म । शेषं समावेशने भवति । यदि कदाचित् कुतोपि कारणात् ऋतुगमनपि अप्राप्तं प्राप्नोति तदा पूर्वं 'आरोहोरुमि' त्यादिजपः । ततो 'विष्णुर्योनिम्' इत्याद्यभिमन्त्रणम् इत्येव प्रतिपादयतीति नास्माभिरपेः स्वारस्यमनाद्रियते । अपि च चतुर्थीसमावेशनमपूर्वार्थमङ्गीकृत्य तत्र समावेशनस्य परिभाषया मैथुनार्थं शयनमित्यभ्युपगच्छतां 'दैवादृतुगमनमपि' इत्यादिनाप्राप्त ऋतुसमावेशने पूर्वं 'आरोहोरुं' इत्यादिविवाहकर्मार्थपत्नीगमनं अनन्तरमृतुगमनमिति एकस्मिन्नेव दिने द्विः पत्नीगमनं प्राप्नोति, तथायुक्तं 'सुम्थ इन्द्रो सकृत्

पुत्रं ' (याज्ञ. १. ८०) इति योगीश्वरेण द्विर्गमनस्य प्रतिषिद्धत्वात् । न च जपमात्रं ' आरोहोरुम् ' इत्यादेः भवता अभ्युपगम्यते ' मैथुनार्थं शयनम् ' इति वदता । न च ' दध्नेन्द्रियकामस्य जुहुयात् ' इत्यत्रेव इहापि एकमेव पत्नीगमनं कर्मद्वयमनुगृह्णातीति वाच्यम् । तत्र ह्येकस्मिन्नेवाग्निहोत्रकर्मणि दध्नो गुणविधिरभ्युपगम्यते । इह तु चतुर्थीसमावेशनात् भिन्नमेवर्तुसमावेशनमिति कर्मभेदोऽभ्युपगम्यते भवता । तस्मात् कुण्डपायिनामयनाग्निहोत्रन्यायेनैकस्मिन्नहनि द्विः पत्नीगमनं प्राप्नोत्येव । किमतो यद्येवम् । एतदतो भवति दृष्टे संभवत्यदृष्टकल्पनमन्याय्यमेव स्यादिति । अपि च पारिभाषिकमेव समावेशनमिति वदतां ' ऋतुसमावेशने इति ऋतुलिङ्गात् ', इति लिङ्गादर्थविवरणं सुदर्शनाचार्यस्य अनर्थकमेव स्यात् । तस्मात् न सर्वात्मना चतुर्थीसमावेशनं सूत्रकारेण विहितमित्यसमञ्जसमेव परेषां प्रत्यवस्थानमिति सिद्धम् ।

स्यादेतत्— आचार्येण हरदत्तेनानाकुलाख्यव्याख्यायां समावेशनन्त्वस्मिन्नेवापररात्रे नियमेन भवति ' इति चतुर्थीसमावेशनस्य नियमोऽभिहितः । न च कथमनेनर्तुमतीविवाहः सिद्ध्यतीति वाच्यम् । ' इदमेव समावेशनं मन्त्रवत् नान्यत् ' इति वाक्यशेषश्रवणात् । नूनमस्य समये युवतय एव

विवाह्यमाना आसन्निति अनाकुलाख्यागृह्यव्याख्या ज्ञापयति। अन्येनापि आण्डपिल्लयार् नाम्नाचार्येण 'यदि चतुर्थीसमावेशनमृतुसमावेशनं च युगपत्प्राप्नुतः' इति वदता स्पष्टमेवानयोर्भेदोऽभिहितः । मन्त्रोऽप्यारोहोरूमित्यादिकः अमुमेव पक्षमनुगृह्णाति । तस्माच्छास्त्रीय एवर्तुमतीविवाह इति । एवं प्राप्ते ब्रूमः । नैतदेवमिति । न हि समावेशनपदं भवदभीष्टे व्यवायकर्मणि प्रयुनक्ति आचार्यो हरदत्त इत्यत्र कारणमुपलभामहे । ननु वाक्यशेषमत्र कारणमित्यवोचाम । न । अस्मिन्नेव समावेशने 'आरोहोरूमि'ति मन्त्रजप, नान्यत्र इत्येव तस्यार्थो भवितुमर्हति प्रकृतत्वात् । एतेनान्योऽप्याचार्यो व्याख्यातो वेदितव्यः । यदुक्तं मन्त्रोऽप्यनुगृह्णातीति तत् परिहृतं पूर्वमेव 'श्रीरिणाम' इत्यत्र । अस्माकं पुनः पक्षे तु मन्त्राणां सुतरां प्रयोगसमवेतार्थस्मारकत्वं संभवति । ऋतुसमावेशनस्यैकस्यैव रागतः प्राप्तस्य सूत्रकारेणानूदितत्वात् । तस्मात् चतुर्थीसमावेशनमभ्युपगच्छन्नपि हरदत्ताचार्यः न भवदभीष्टं व्यवायं अङ्गीकरोतीत्यत्र कारणं पश्यामः । अपि च 'शेषं समावेशने जपेत्' इत्यनन्तरं 'यदा मलवद्वासा स्यात्' इति रजस्वलाधर्मानुपदिश्यानन्तरं ऋतुसमावेशनं ब्रवीति । यदि रजस्व-

लैव विवाह्या स्यात् कथं तद्धर्मोपदेशो विवाहानन्तरं स्यात् । तस्मादप्यसङ्गतं परेषां प्रत्यवस्थानम् ।

अथापि स्यात् । कथं रजस्वलाधर्मोपदेशेनर्तुमतीविवाहः प्रतिषिध्येत । आपस्तंबेन भगवतोपदिश्यमानो रजस्वलाधर्मः प्राथमिक एव रजोदर्शने इत्यत्र किं मानम् । प्रत्युत प्रथमर्तौ व्रताभाव एवोपदिश्यते शास्त्रेषु । तथा च निर्णयसिन्धौ स्मृतिचन्द्रिकायाम्—'प्रथमर्तौ तु पुष्पिण्याः पतिपुत्रवतीस्त्रियः । अक्षतैरासनं कृत्वा तस्मिंस्तामुपवेशयेत्' इत्यादिभिर्व्रताभाव एवोपदिश्यते । उपरिष्टाच्च 'द्वितीयाद्यृतुषु तन्नियममाह मदनपारिजाते दक्षः 'अञ्जनाभ्यञ्जने स्नानं प्रवासं दन्तधावनम्' इत्यादिनिषेधं पठति । आचारेऽपि प्रथमर्तौ व्रताभावमेवोपलभामहे । सूत्रे पुनरुपदिश्यते व्रतम् । तस्मात् विवाहात् प्राचीनेष्वृतुषु व्रतानुष्ठानं नास्त्येवेति अभ्युपगच्छामः । अपि च 'तिस्रो रात्रीर्व्रतं चरेदञ्जलिनावापिबेदखर्वेणवापात्रेणप्रजायैगोपीथाय' (तै. सं. २. ५. १.) इत्युत्पत्स्यमानप्रजावैगुण्याभावफलकमिदं श्रूयते व्रतम् । तच्च कथं विवाहात् प्राक् प्रजोत्पादनानधिकृताया संभवेत । अथापि भवतः श्रद्धामनुरुद्ध्य अभ्युपगच्छामो व्रतं एवमपि प्राग्विवाहात् मात्रादिभिरु-

पदिश्यतां, ऊर्ध्वं तु विवाहात् पतिना संस्कारार्थं नियमार्थं च पुनरुपदेशो भवतु व्रतस्य । तस्मात् न व्रतोपदेशावष्टंभेनर्तुमतीविवाहप्रतिषेधः सिद्ध्यति इति । एवं प्राप्ते ब्रूमः— नैतदेवमिति । कस्मात् । प्रमाणाभावात् । तथा हि—भगवान आपस्तंबः विवाहानन्तरं रजस्वलाधर्मानुपदिश्यानन्तरमृतुसमावेशनं विदधाति । अतः पाठक्रमन्यायेनर्तुमतीविवाहः प्रतिषिध्यत इति गम्यते । न च विवाहात् पूर्वं रजस्वलाधर्माभाव एवेत्यत्र किमपि प्रमाणं पश्यामस्त्वद्वचनादृते । ननु प्रथमर्तौ व्रतं नास्त्येवेति निर्णयसिन्धौ प्रतिपादितमित्यवोचाम । एतदपि नाभीष्टं पुष्णीयात्; प्रागपि विवाहात् द्वितीयादिष्वृतुषु व्रतस्य अनुष्ठेयत्वात्। अथ प्राग्विवाहात् सर्वेष्वपि ऋतुषु व्रताभावमभ्युपगच्छसि तदपि न सङ्गच्छते प्रमाणाभावात् । प्रथमर्तौ हि व्रताभावो भवद्रीत्या न पुनरन्येष्वृतुषु । वस्तुतस्तु न भवतामर्थः संभवति निर्णयसिन्धुपरिशीलने प्रेक्षावतां । अतिमन्दं हीदं प्रत्रवस्थानम् । यदुक्तं सत्यपि प्राग्विवाहात् व्रतानुष्ठाने मात्रादिभिरुपदिश्यतामिति तदपि न, प्रमाणाभावात् । नन्वस्त्याचारः । न । विवाहादूर्ध्वं हि मात्रादिभिरुपदिश्यमानं सूत्रविरुद्धमाचारं उपलभामहे । न पुनः प्रागपि वि-

वाहात् उपदिश्यमानम् । तस्मात् स्मृत्याचारविरुद्धमिदं मनोरथमात्रमेव केवलं स्यात् भवताम् । यदप्युक्तं प्रजावैगुण्याभावफलोद्देशेन विधीयमानत्वात् व्रतस्य प्राग्विवाहात् प्रजोत्पादनानधिकृतायाः व्रताभाव एव न्याय्य इति, अत्र ब्रूमः । नात्र फलोद्देशेन व्रतं विधीयते, कामादिशब्दाघटितत्वात् । किंतु औदुम्बराधिकरणन्यायेनार्थवादो भवितुमर्हति । अन्यथा प्रजाकामनारहितया विधवया च व्रतं नानुष्ठेयं स्यात् । तच्च व्यासादिस्मृत्याचारविरुद्धमास्तिकैरनाद्रियेत । तस्मादर्थवादो भवितुमर्हति । अर्थवादत्वाच्च रजस्वलाभिरनुष्ठेयमेव । अतः प्राग्विवाहादपि रजस्वलया तद्धर्मानुष्ठानं न्याय्यमेव भवितुमर्हति । ननु प्रजोत्पादनानधिकृतया नानुष्ठेयमित्यवोचाम । न । अनधिकृतयापि विवाहानन्तरमुत्पत्स्यमानप्रजावैगुण्याभावफलोद्देशेनानुष्ठानस्य कर्तव्यत्वात् । यथा प्रागपि विवाहात् सत्पतिलाभार्थं अश्वत्थसेचनमीश्वराराधनं च क्रियत इत्याचारः क्वचित् एवमिहापि भवतु । अपि च प्रागपि विवाहात् व्रतानुष्ठानं मास्तु इति प्रत्यवस्थानमेव तावदसङ्गतम् । रजोनिमित्तत्वात् व्रतानुष्ठानस्य । न पुनर्विवाहं निमित्तीकृत्य रजस्वलाधर्माः प्रवर्तन्ते । तस्मादप्यसङ्गतमिदं प्रत्यवस्थानम् । तस्मात् सत्यपि चतुर्थीसमा-

वेशने केषांचिदाचार्याणां मतेन नर्तुमतीविवाहः शास्त्रतः प्राप्नोतीति सिद्धम् । परमार्थतस्तु चतुर्थीसमावेशनमेव नास्तीति प्रपञ्चितमधस्तात् ॥

एवं त्रिरात्रब्रह्मचर्यविधाने न किमपि वक्तव्यमस्ति, पराक्रान्तत्वात् सूरिभिर्वयोनिर्णये । अथापि किञ्चिदुच्यते । आश्वलायनगृह्यव्याख्याने गार्ग्यनारायणः 'वेदेषु सद्य एव व्यवायो दृष्टः ; गृह्ये तु ब्रह्मचारिणौ त्रिरात्रं इति ब्रह्मचर्यं विहितम्' इत्यब्रवीत् अतोऽवगच्छामः व्याख्यातुः काले सद्यो व्यवाय आसीदिति ऋतुमतीविवाहः शास्त्रीय इति पूर्वपक्षी प्रत्यवतिष्ठते । अत्राभिधीयते ; सूत्रविरुद्धमाचारं हि व्याख्याता प्रतिपादयति । सोऽयमाचारः कथं शास्त्रसंमतः स्यात् गृह्यविरोधात् । एवं स्वरसतः प्रतीयमानमर्थं परित्यज्य किमप्यर्थान्तरं कल्पयतां महत् साहसम् । एवमेव हि समावेशनबलादेवर्तुमतीत्वमनुमिमानाः अनाकुलाख्यव्याख्यामाकुलीकुर्वन्ति । तस्मात् सिद्धमृतुमतीविवाहः गृह्येषु नानुज्ञायत इति । एतेन प्रधानमल्लनिबर्हणन्यायेनेतराणि सूत्राणि व्याख्यातानि वेदितव्यानि ॥

इति श्रीवाधूलकुलवंशेन गुरुस्वामिसूनुना नटेशेन विरचितायां परिणयमीमांसायां श्रुत्यर्थविचारोनाम

**प्रथमोऽध्यायः ॥**

# द्वितीयोऽध्यायः ॥

## श्रौतलिङ्गविचारः ।

अथेदानीं श्रौतलिङ्गस्मार्तश्रुत्योः बलाबलं विचारयामः– स्मृतिषु रजस्वलायाः विवाहः प्रतिषिध्यते, वैवाहिकमन्त्र-लिङ्गानि पुनः रजसोऽनन्तरमेव विवाहमपूर्वत्वात् गमयन्ति; तत्र स्मृत्यपेक्षया मन्त्रलिङ्गानि प्रबलानि इति आधुनिकाः प्रतिपादयन्ति इत्येतदेव संशयकारणम् । अतोत्र कः पुन-र्न्यायः कश्च न्यायाभास इति विचारयामः ; किं तावत् प्राप्तम्? श्रौतलिङ्गस्यैव प्राबल्यमितरेभ्यः इति । कस्मात् । श्रौतत्वात् । श्रुतिर्हि परमं प्रमाणमार्याणां, अपौरुषेयत्वात्; पुरुषप्रणीताश्च पुनः स्मृतयः न निरपेक्षं प्रमाणं भवन्ति; तासां वेदमूलकत्वात् । लिङ्गानि पुनर्वेदेषु उपलभ्यन्ते । अतः तेषां निरपेक्षं प्रामाण्यमभ्युपगन्तव्यम् । ननु 'स्पष्ट-एवः श्रुतिः' इति न्यायेन श्रुतिलिङ्गाधिकरणोक्तेन स्मार्तश्रुते-रेव प्राबल्यमङ्गीकर्तव्यं ; किमिति सा स्मृतिगता इति उपे-क्षणीयम् । श्रुतौ वा स्मृतौ वा यत्र अर्थविप्रकर्षः तदेव दुर्बलं इत्येव पन्थाः साधुः । यद्युपक्रम एव शाक्यादिस्मृतिवत्

मन्वादिस्मृतीनामपि प्रामाण्यं प्रतिषिध्यते तत्र सर्वात्मना वैदिकलिङ्गानां प्राबल्यं अभ्युपगच्छाम: । आर्या हि वयं वेदाविरुद्धा: स्मृतय: शिष्टपरिगृहीता: प्रमाणमित्येवातिष्ठामहे । अत: किञ्चिदपि वा प्रमाणत्वेनाभ्युपगतानां शिष्टस्मृतीना श्रुत्यविरोधो अस्ति न वेत्येव परीक्षितव्यम् । अत एव भट्टपादा:—

" नैव तावच्छ्रुतिस्मृत्यो: स्वरूपेण विरुद्धता ।
बलाबलपरीक्षा वा प्रमेयद्वारिका हि सा ॥ १ ॥

इत्यादिकमवोचन शिष्टाकोपाधिकरणे । अत: श्रौतलिङ्गापेक्षया स्मार्तश्रुतेरेव प्राबल्यमभ्युपेतव्यम् इति चेन्– भ्रान्तोऽसि, कथमनादिनिधना दिव्यमयी वेदवाक् प्रामाणमूर्धन्या मात्रयापि प्रमाणान्तरेभ्यो दुर्बला भवितुमर्हति । कथं वा स्मृत्यपेक्षया । अहो ! प्रदर्शितं प्रमाणलक्षणविज्ञानं । अपौरुषेयत्वं हि प्रमाणानां प्राबल्ये नियामकम् मन्यन्ते शास्त्रतात्पर्यविद: । तथा हि— समन्वयाधिकरणे (ब्र. १. १. ४) वेदान्तानां कार्यपरत्वं खण्डयन श्रीमन्तो वाचस्पतिमिश्रा: ........" तेन अपौरुषेयत्वे सिद्ध भूतार्थानामपि वेदान्तानां न सापेक्षतया प्रामाण्यविघात: " इत्यवोचन् भामत्याम् । श्रुतप्रकाशिकायामपि " ननु अष्टवर्षं ब्राह्मणं इत्यत्र " इत्या-

दि बहु प्रपञ्चयित्वा "अन्तरङ्गत्वं हि प्रत्यक्षश्रुतिसिद्धम्, क्त्वाश्रुतिस्तु स्मृतिगता" इत्युक्त्वा "क्त्वाश्रुतिः न बलीयसी" इति स्पष्टमेव वैदिकलिङ्गस्य प्राबल्यं प्रतिपादितम्। अतः स्मार्ती श्रुतिः स्वयं जात्या श्रुतिलिङ्गाधिकरणेन प्रबलापि पौरुषेयगतत्वेन दुर्बलैव। प्रबलमेव अपौरुषेयगतं श्रौतलिङ्गम्। अत एव भट्टाचार्याः 'यत्र पुनः श्रुतिरानुमानिकी, लिङ्गं च प्रत्यक्षं, तत्र कथम्; यथा स्मृतिवैदिकलिङ्गविरोधे; तत्र स्मृतेः मूलान्तरमपि संभाव्यते, न तु लिङ्गस्य इति तदेव बलवदित्यनुसर्तव्यम्' इत्यवोचन्। यत्तु 'नैव तावत् श्रुतिस्मृत्योः' इत्यादिभट्टवार्तिकं स्मार्तश्रुतिप्राबल्ये प्रमाणमित्युक्तं तत् पदार्थतत्क्रमबोधकयोः सजातीययोः विजातीययोः प्रमाणयोः प्राबल्यदौर्बल्ये नियामकमिति प्रकृतानुपयुक्तमेव। ननु यद्येवं कथं तर्हि आचारकाण्डे सायंसन्ध्याप्रकरणे 'वारुणीभिस्तथादित्यम्' इत्यत्र स्मार्तश्रुतेः प्राबल्यं प्रत्यपादयन्। अत्र ब्रूमः— उपेक्षणीयमेवात्र माधवाचार्याणां मतम् न्यायविरोधात्। अथवा तत्र श्रौतलिङ्गस्य अन्यत्र चारितार्थ्यं बीजं इति कृत्वा इति परिहारः कर्तव्यः। तर्हि आपस्तंबगृह्यव्याख्यानावसरे 'अन्यो वैनामभिमन्त्रयते' इत्यत्रापि स्मार्तश्रुतेरेव प्राबल्यं सुदर्शना-

चार्याः अभ्युपगच्छन्तीति चेत्, ब्रूमः । भ्रान्त एवात्र सुद-र्शनाचार्यः न्यायविरुद्धं ब्रवीनीति । तस्मात् सर्वात्मना अपौरुषेयस्य श्रौतलिङ्गस्यैव प्राबल्यमङ्गीकर्तव्यम् । इति प्रकृतेपि विवाहविषये श्रौतलिङ्गस्वारस्यात् रजस्वलाविवाह-स्यैव प्राथमकल्पिकत्वम् । इत्येवं प्राप्ते,

ब्रूमः—स्मार्तश्रुतेरेव प्राबल्यमङ्गीकर्तव्यमिति । कस्मात् । न्यायमूलकत्वात् । तथा हि—श्रुतिर्हि नः सर्वेषां परमं प्रमाणमित्यत्र न कोऽपि विसंवदते । तदविरुद्धाः स्मृतयः तन्मूलकत्वात् प्रमाणमेव इति विरोधाधिकरणे प्रपञ्चितम् । अनन्तरं विरोधः पुनः श्रुतिस्मृत्योः क्वास्ति नास्तीति प्रति-पादयितुं तृतीयं शिष्टाकोपाधिकरणमारचयति भगवान् सूत्र-कारः । तत्रायमभिप्रायः शास्त्रदीपिकाकाराणाम् । शिष्टपरि-गृहीताना मन्वादिस्मृतीनां साङ्ख्ययोगपाञ्चरात्रपाशुपतशा-क्यादिस्मृतीनामिव न वेदेनसहजन्मना वैरमस्ति, येन ता-सामपि शाक्यादीनामिव स्वरूपतो विरोधः अभ्युपगम्यते । किन्तु यावता वेदं न विरुन्धन्ति तावतैव तासां प्रामाण्यम् । अतः विरोधः पुनरनयोरस्ति न वेत्येव परीक्षितव्यम् । स च प्रमेयनिबन्धनः । अतः प्रमाणविरोधापेक्षया प्रमेयविरो-धस्यैव प्राबल्यं सिद्ध्यति । यदि मन्वादिस्मृतिषु आजान-

सिद्धः प्रद्वेषः, तर्हि प्रथममेव शाक्यादिस्मृतीरिव ता अपि परित्यज्यन्ताम् । अतः न सर्वप्रकारेण प्रमाणबलमेकमेवाङ्गीकृत्य प्रत्यवस्थातव्यम् । तस्मात् यदि प्रमेये स्मृतिः शीघ्रमेव बोधमुत्पादयति, तर्हि सैव बलीयसी इति अङ्गीकर्तव्यम् । इति । अत एव भट्टपादाः "नैव तावत् श्रुतिस्मृत्योः स्वरूपेण विरुद्धता । बलाबलपरीक्षा वा प्रमेयद्वारिका हि सा ।' इत्यादिकमवोचन् । न हि सर्वो बलवानिति दुर्बलं हिंस्यादेव । कदाचित् दुर्बलमपि अनुसरेत् । अत एवान्यत्र 'विधिस्तदैव बाधकं यद्यबाधेन नोपपद्येत' इत्यब्रवीत् पार्थसारथिमिश्रः । विरोधस्य किं लक्षणं इत्याकाङ्क्षायाम्— 'युगपत्प्राप्तिहेतुश्च विरोधस्तुल्यकार्ययोः' इति भट्टपादाः प्रत्यपादयन् । तदेवं यदि प्रमेये पुनः श्रुतिस्मृत्योर्युगपत्प्राप्तिः तर्हि प्रमाणबलमास्थाय श्रुतिरेव गरीयसीति अनाकुलः पन्थाः । यदि तु प्रमेये स्मृतिः शीघ्रमेव बोधमुत्पादयति तर्हि स्मृतिरेव गरीयसी ; प्रमाणबलापेक्षया प्रमेयबलस्यैव प्राबल्यात् । अत्रेदं बीजम् । यावता श्रौतं लिङ्गमुपलभ्य कमप्यर्थविशेषं कल्पयामः, तावतैव प्राच्यैः परमर्षिभिः अस्माद्वान्यस्माद्वा वेदवाक्यात् निर्धारितोर्थः स्मृतिषूपलभ्यमानः बुद्धिमारोहति । अर्थात्, वेदा-

नाम् अपौरुषेयत्वेन प्राबल्येऽपि कल्प्यत्वेन दौर्बल्यम् ; स्मृतिवचनानां पौरुषेयत्वेन दौर्बल्येऽपि क्लृप्तत्वेन प्राबल्यमिति फलति । न च स्मृत्यादीनां भ्रान्त्यादिमूलकत्वस्यापि संभवात् वेदस्य तादृशसंभावनाया एव असत्वात् श्रुत्यनुमानमात्रमावश्यकमिति श्रौतलिङ्गस्यैव प्राबल्यं किं न स्यादिति वाच्यम् । यतः 'तीर्थस्थाणु' इत्यापस्तंबगृह्यव्याख्याने 'नन्वाचाराच्छ्रुतिरनुमेयेति न तयालिङ्गबाधो युक्तः' इति स्थिते पूर्वपक्षे, 'मैवं लिङ्गस्यात्र श्रुतिविहितशेषिविषयसापेक्षत्वात् ; तत्र ह्यनुमेयश्रुतेर्दौर्बल्यं यत्रास्याः प्रत्यक्षश्रुत्यैव विरोधः । अतोऽनुमेयाऽपि श्रुतिः सापेक्षलिङ्गबाधिकैव' इति सुदर्शनाचार्येण व्यवस्थापितत्वात् ।

अत एव आर्यम्लेच्छाधिकरणे म्लेच्छप्रसिद्धेः प्राबल्यमित्थं समर्थितम् शास्त्रकारैः । क्वचिदाचारापेक्षयापि श्रौतलिङ्गस्य दौर्बल्यमङ्गीकृतम् । अत एव हि 'उपरि हि देवेभ्यो धारयति' इत्यत्र आचारप्राप्तमेवानुवदतीदं वचनमिति पूर्वपक्षः कृतः । नचायं पूर्वपक्ष इति उपेक्षामर्हति । सिद्धान्ते पुनरस्य उपमर्दाभावात् । तस्मात् सिद्धं शास्त्रतः स्मार्तश्रुतेः प्राबल्यम् ॥

यत्तूक्तं समन्वयाधिकरणे अपौरुषेयत्वमेव हि प्रमाणानां

प्राबल्ये नियामकं मन्यन्ते वाचस्पतिमिश्राः इति, तत् तथा नेति कोऽब्रवीत् । वयमप्येवमेव ब्रूमः । अभ्युपगते च स्मृतीनामपि शिष्टपरिगृहीतानां प्रामाण्ये प्रमेयबलाबलमनुसृत्यैव निर्णयः कर्तव्यः इत्येवातिष्ठामहे । तच्च सर्वतन्त्रस्वतन्त्राः श्रीमन्तो वाचस्पतिमिश्रा अपि अभ्युपगच्छन्ति । अत एव 'लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि' (ब्र. ३. ३. ४४.) इत्यधिकरणे आर्यम्लेच्छाधिकरणन्यायेन आन्ध्रप्रसिद्धेरेव प्राबल्यमङ्गीकर्तव्यमिति राजशब्दः क्षत्रियजातौ रूढः इति अवेष्ट्यधिकरणं न्यरूपयन भामत्याम् । अपि च न समन्वयाधिकरणे वेदस्यापौरुषेयत्वं स्थापयितुं प्रवृत्ताः श्रीमन्तो वाचस्पतिमिश्राः । किन्तु भूतं वस्तु प्रतिपादयतां वेदान्तानां अपौरुषेयत्वं न सिद्ध्येत्, भूतार्थत्वात्; अतः कार्यपरत्वं तेषामपि अङ्गीकर्तव्यमिति विवदमानं पूर्वपक्षिणं प्रति 'यदि भूतार्थत्वेनापौरुषेयत्वं वेदान्तानां न सिद्ध्येत्, तर्हि कार्यार्थत्वेनापि तन्न सिद्ध्येत्' इति वेदस्य पौरुषेयत्वप्रसङ्गः; अतः अन्यथा यतितव्यमपौरुषेयत्वं व्यवस्थापयितुम्; तच्च प्रदर्शितं न्यायकणिकायां मण्डनाचार्याणां 'विधिविवेक' व्याख्यानावसरे इति भूतार्थत्वेन नापौरुषेयत्वमपैतीत्येव प्रतिपादयितुं

प्रवृत्ताः इति स्पष्टमेव नानुकूलं प्रकृतस्य । यदप्युक्तं श्रुतप्रकाशिकायां वैदिकलिङ्गस्य प्राबल्यं प्रतिपादितमिति, तत्र न स्मार्तश्रुतेः दौर्बल्यमिति कृत्वा ; किन्तु अर्थापत्त्या अन्यथानुपपत्तिलक्षणया श्रौतलिङ्गस्य प्राबल्यम् 'आनर्थक्यप्रतिहताना विपरीतं बलाबलम्' इति सिद्ध्यतीति कृत्वा । यच्चोक्तम् 'यत्र पुनः श्रुतिरानुमानिकी, लिङ्गं च प्रत्यक्षम्' इत्यादिकमवोचन् भट्टाचार्याः इति तत्रापि आनर्थक्यप्रतिहतत्वमेव कारणम् ; ननु अर्थविप्रकर्षात् पारदौर्बल्यं प्रतिपादयितुं प्रवृत्ते ह्यधिकरणे कथमानर्थक्यप्रतिहतत्वप्रदर्शनस्यावकाशः ? । प्रसङ्गादिति ब्रूमः ॥ ननु कस्मात् 'प्रमाणप्राबल्यमङ्गीकृत्य' इति नाभ्युपगम्यते इति चेत्' ब्रूमः । यद्यर्थविप्रकर्षनिबन्धनमेव दौर्बल्यमत्रापि अभ्युपगच्छेत् तर्हि वाक्यशेषेऽपि तदेव कारणमुपनिबध्नीयात् । नैवमुपन्यबध्नात् । किं तु 'तत्र स्मृतेः मूलान्तरमपि संभाव्यते । न तु लिङ्गस्य' इत्येव अब्रवीत् । तस्मादानर्थक्यप्रतिहतत्वमालोच्यैव प्रमाणबलमास्थितमाचार्यैरित्येव अभ्युपगन्तव्यम् । अत एवाग्रेऽपि 'न प्रमाणविरोधेन निर्णयः कर्तव्यः, किं तु प्रमेयविरोधेनैव इति शिष्टाकोपे अवोचाम इति स्मारयति—

'दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा ।
तदापि विपरीतत्वं शिष्टाकोपे यथोदितम् ॥' इति
अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः ।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः ॥'

इति च ब्रुवन् । तस्मात्कारणादवगच्छामः आनर्थक्य-प्रतिहतत्वमेवात्र मूलमिति । अत एव अस्यैव वार्तिकस्य व्याख्यानावसरे 'अनन्यगतित्वात् स्मृतिं बाधते' इति भट्टसोमेश्वरोऽपि न्यायसुधायामब्रवीत् । तस्मादप्यसङ्गतमेवेदं वार्तिकमवलम्ब्य प्रत्यवस्थानम् ॥

यदप्युक्तं 'नैव तावत् श्रुतिस्मृत्योः' इत्यादिवार्तिकं पदार्थतत्क्रमबोधकयोः सजातीययोः विजातीययोश्च प्रमाणयोः प्राबल्यदौर्बल्ये नियामकमिति; तत् तथैव वयमप्यभ्युपगच्छामः । अत एव च स्मार्तश्रुतेः प्राबल्यमातिष्ठामहे पदार्थतत्क्रमबोधकयोः श्रुतिलिङ्गयोः सजातीयविजातीयप्रमाणयोः प्राबल्यदौर्बल्ये नियामकमिति । अपि चात्र भवान् पृष्टो व्याचष्टाम्; किं पदार्थः श्रुत्या बोध्यते, अहोस्वित् लिङ्गेनेति । श्रुतिर्वा लिङ्गं वा अन्यद्वा यत् किंचित् पदार्थं बोधयत् प्रबलमेवेति अभ्युपगच्छता भवता प्रमेयगतबोध एवात्र कारणमङ्गीकर्तव्यम्; अन्यथानुपपद्यमानत्वात् । तत्र कथं भव

त्पक्षं सङ्गच्छते; तथाहि— न हि वेदबाधितः पदार्थक्रमः स्मृत्या बाध्यमानं पदार्थमप्यपेक्षते । स्मार्तपदार्थस्य जात्या प्राबल्येऽपि पौरुषेयस्मृतिगतत्वेन दौर्बल्यमेवेति भवता अभ्युपगम्यमानत्वात् । 'वेदं कृत्वा' इति 'क्त्वा' श्रुतेः अपौरुषेयगतत्वेन क्रमस्यैव जात्या दौर्बल्येपि प्राबल्यमङ्गीकर्तव्यम् आयुष्मता । अथ 'प्रमेयविरोधनिबन्धनः निर्णयः' इति स्मार्तमपि पदार्थमालोच्यैव वैदिकी 'क्त्वा' श्रुतिः प्रवर्तते इति अभ्युपगच्छसि, आगतोसि मार्गेण । अत एव श्रीमान् पार्थसारथिमिश्रोपि एवमेवाब्रवीत् शास्त्रदीपिकायामिति परित्यज्याभिमानम् स्मार्तश्रुतेः प्राबल्यमङ्गीकर्तव्यम् भवता । सर्वथापि तु निरर्थकमिदं प्रत्यवस्थानम् । यदपि माधवसुदर्शनाचार्यप्रभृतयो भ्रान्ता एवेति तदसत्प्रलाप एवेत्युपेक्षणीयम् । तस्मादानर्थक्यप्रतिहतत्वमन्तरेण सर्वत्रापि स्मार्तश्रुतेः प्राबल्यमङ्गीकर्तव्यमिति सिद्धम् । ऋतुमतीविवाहमुपोद्बलयच्छ्रौतं लिङ्गं तु नास्त्येवेति प्रपञ्चितमतीतेऽध्याये । इह तु तदस्तीति कृत्वा प्रवर्तिता चिन्ता— अत्रेदमपि न प्रस्मर्तव्यम्; सामान्यसंबन्धबोधकप्रमाणमन्तरेण लिङ्गादीनां किञ्चिदर्थावबोधकत्वं नास्त्येवेति । श्रुत्यादिषट्प्रमाणानामन्यतमं सामान्यसंबन्धं बोधयेत् । इह

तु अनारभ्याधीताः खिलाः किल लिङ्गत्वेनाभ्युपगम्यन्ते भवता। न चैकाग्निकाण्डसमाख्यया सामान्यसंबन्धबोधो भवत्विति वाच्यम् । नेयं समाख्या अव्यभिचरितेन विवाहमेव बोधयेत्, इतरेषामपि स्मार्तकर्मणामत्र बोधसंभवात्। तस्मादत्यन्तदुर्बलमेतच्छ्रौतलिङ्गमस्तीति प्रत्यवस्थानम् इति सिद्धम् ॥

इति श्रीवाधूलकुलवंशेन गुरुस्वामिसूनुना नटेशेन विरचितायां
परिणयमीमांसायां बलाबलविचारोनाम
द्वितीयोऽध्यायः ॥

# तृतीयोऽध्यायः ॥

* 

अवसितः श्रुत्यर्थविचारः । इदानीं स्मृतीर्विचारयामः । तत्र गर्भाष्टमं वयो हि स्त्रीणां विवाहकाल इति प्रथममेव प्रपञ्चितमस्माभिर्भूमिमारचितवद्भिः । गौणोपि कालः प्राक्-रजोदर्शनात् इति स्मृतिभ्योऽवगच्छामः । कथं । प्रायश्चित्त-स्मरणात्, निन्दाश्रवणात्, निषेधदर्शनाच्च । प्रायश्चित्तं हि स्मर्यते विवाहात् पूर्वं रजः पश्यन्त्याः कन्यायाः, तत्पितुः, तद्वोढुश्च स्मृतिषु । तथा हि— निर्णयसिन्धावाश्वलायनः—

'कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः ।
शुद्धिं च कारयित्वा तामुद्वहेदनृशंसधीः ॥ १ ॥

पिता ऋतून्स्वपुत्र्यास्तु गणयेदादितः सुधीः ।
दानावधि गृहे यत्नात् पालयेच्च रजोवतीम् ॥ २ ॥

दद्यात् तदृतुसंख्या गाः शक्तः कन्यापिता यदि ।
दातव्यैकापि निःस्वेन दाने तस्याः यथाविधि ॥ ३ ॥

दद्याद्वा ब्राह्मणेष्वन्नमतिनिःस्वः सदक्षिणम् ।
तस्यातीतर्तुसंख्येषु वराय प्रतिपादयेत् ॥ ४ ॥

उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः ।
अदृष्टरजसे दद्यात् कन्यायै रत्नभूषणम् ॥ ५ ॥

तामुद्वहन् वरश्चापि कूश्माण्डैर्जुहयात् द्विजः ॥' इति ।

एवं विवाहात् प्राग्रजोवत्याः प्रायश्चित्तस्मरणात् निषेध एव रजसोनन्तरं स्त्रीणां विवाहस्य । ननु प्रायश्चित्तानन्तरमपि विवाहोऽभ्यनुज्ञायते । सत्यं; आपत्कल्पतयाऽभ्यनुज्ञायते । न पुनर्गौणतया । कथं । न क्वापि गौणकालेऽनुष्ठीयमानस्य प्रायश्चित्तं विहितं पश्यामः । प्रायश्चित्तं हि कालातिक्रमेण संभूतस्य दुरितस्य निवारणाय विधीयते ह्यधिकार सिध्यै । तद्धि कथं गौणत्वाभ्युपगमे सङ्गच्छेत । मुख्यकालकृतं पुण्यं हि केवलं न संभवति गौणकाले । न चैतावता दोषोपि संभवतीति ब्रह्मणापि सुवचम् । अत एव 'आषोडशात् ब्राह्मणस्य सावित्री नातिवर्तते' (मनु. २. ३८.) इति गौणकालस्य दोषं नास्मरत् भगवान् मनुः। उत्तरत्रापि स एव 'अत ऊर्ध्वं त्रयोप्येते यथा कालमसंस्कृताः । सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः' (मनु २ ३९.) इति

दोषं संकीर्तयति, विदधातिच प्रायश्चित्तं 'येषां द्विजानां सावित्री नानूच्येत यथाविधि। तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत्' (मनु. ११. १९१.) इति। अत्र 'येषां ब्राह्मणक्षत्रियविशां आनुकल्पिककाले उपनयनं न कृतवान्' इति वदन् गौणस्यापि कालस्यातिक्रम एव प्रायश्चित्तं न्याय्यं मन्यते। एवं योगीश्वरेणापि भगवता 'अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः। सावित्रीपतिता व्रात्याः व्रात्यस्तोमादृते क्रतोः' (याज्ञ. १. ३८.) इति उपनयनस्य परमावधिकालानन्तरमेव प्रायश्चित्तं विधीयते। एवमापस्तम्बेनापि भगवता गौणकालविधानानन्तरमेव 'अतिक्रान्ते सावित्र्याः काल ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत्' इत्यधिकारसिद्ध्यै प्रायश्चित्तं संकीर्त्य, 'अथोपनयनम्' 'ततः संवत्सरमुदकोपस्पर्शनम्' इत्यध्ययनयोग्यतासिध्यर्थं श्रावयित्वा 'अथाध्याप्यः' इत्यध्यापनं विधीयते इति नैतत् तिरोहितमस्माकम्। नैवं गौणकाले मुख्यकालातिक्रान्तिप्रायश्चित्तमस्मार्षीत्। अत एव 'सावित्री नातिवर्तते' इत्यब्रुवन् मन्वादयो महर्षयः। एवमिहापि प्रागुद्वाहात् रजः पश्यन्त्याः प्रायश्चित्तं स्मर्यत इति रजस्वलायाः विवाहाभ्यनुज्ञानं आपत्कल्प एव भवितुमर्हति न पुनः गौणोऽयं कल्पः।

ननु कालातिक्रमे सति कथमभ्यनुज्ञा सङ्गच्छेत । न क्वापि अतिक्रान्तकाले पुनर्विधानं सङ्गच्छते इति चेत्, न । उपनयनस्थानापन्नस्य संस्कारस्यावश्यमनुष्ठेयत्वात् प्रायश्चित्तानन्तरं अभ्यनुज्ञा सङ्गच्छत एव । श्रूयत एव च पुनर्विधानमुपनयनादिषु, 'तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत्' (मनु. ११. १९१.) इत्यादिदर्शनात् । ननु प्रायश्चित्तस्मरणं नापत्कल्पत्वे कारणं भवितुमर्हति प्रमाणाभावात् । नेति ब्रूमः । गौणतयापि वाभ्युपगते काले प्रायश्चित्तस्मरणस्यान्याय्यत्वात्, आपदि विहितस्य ब्राह्मणादिषु क्षत्रियादिधर्मस्य अनापदि प्रायश्चित्तस्मरणाच्च । अत एव कुल्लूकभट्टः 'आनुकल्पिककाल उपनयनं यथाशास्त्रं न कृतवान्' इत्याह । तस्मात् प्रायश्चित्तस्मरणं अतिक्रान्त एव काले भवितुमर्हतीति तदनन्तरं विधानमापत्कल्पमेवोपस्थापयेत् । स्यादेतत् । प्रायश्चित्तस्मरणमेवापत्कल्पत्वे कारणं भवितुमर्हतीति नायमेकान्तः । अन्तरेणापि प्रायश्चित्तमापत्कल्पस्य स्मृतिषूपलभ्यमानत्वात् । अत एव 'अर्वाक् सपिण्डीकरणं यस्य संवत्सरात् भवेत् । तस्याप्यन्नं सोदकुम्भं दद्यात् संवत्सरं द्विजे' (याज्ञ. १. २५५.) इत्यत्र 'यदपि वचनं षोडशश्राद्धानि कृत्वैव सपिण्डीकरणं संवत्सरात् प्रागपि

कर्तव्यं ' इति सोऽयमापत्कल्पः इत्यब्रवीत् आचार्यो विज्ञानेश्वरः । किमतो यद्येवम् । एतदतो भवति; यथान्तरेणापि प्रायश्चित्तमापत्कल्पः श्रूयते एवं सत्यपि प्रायश्चित्ते गौणोपि कल्पः श्रूयताम्, तत्र किं तव च्छिन्नम् । अत एव गौणकाले क्रियमाणस्यापि प्रायश्चित्तं विहितं दृश्यते दक्षिणायनमरण रात्रिमरण अर्घ्यप्रदानादिषु । अत्र ब्रूमः । अपूर्वमिदमायुष्मतः पाण्डित्यं प्रदर्शितम् । न हि दक्षिणायनरात्र्यादयः मरणे गौणकालतया विधीयन्ते अशक्यविधानात् । किं तु 'यस्याहिताग्नेरग्निर्गृहान दहति अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्, इति क्षामवतीष्टिविधानमिव दक्षिणायनमरणादिषु प्रायश्चित्तं विधीयते । कथमत्र गौणत्वं आपत्कल्पत्वं वा स्यात् ईश्वरतन्त्रत्वात् मरणादेः । पुरुषतन्त्रत्वाच्च विवाहादीनां तत्र प्रायश्चित्तमापत्कल्पत्वमेवावगमयेत् । अर्घ्यदानमपि न भवतामनुकूलं प्रायश्चित्तार्घ्यस्यातिक्रान्तकालिकत्वात् । यदपि सपिण्डीकरणमुदाहृतम्, अत्र ब्रूमः । न वयं प्रायश्चित्तस्मरणमेव आपत्कल्पत्वे कारणमब्रूम येन भवतामभीष्टः सिध्यति । किं तु प्रायश्चित्तमापत्कल्पमेवोपस्थापयेत् इत्येवावोचाम । तस्मादन्तरेणापिप्रायश्चित्तं तत्र तत्र वचनादापत्कल्पत्वं श्रूयमाणं नास्मत्पक्षं प्रतिकूलयति ।

तस्मात् प्रायश्चित्तस्मरणात् रजसोनन्तरं स्त्रीणां विवाहः न्यायतः प्रतिषिध्यत इति ॥

अथापि स्यात् । प्राग्विवाहात् रजः पश्यन्त्याः प्रायश्चित्तं कैश्चिदेवाश्वलायनादिभिः स्मर्यते, न पुनः सर्वैरपि मनुबोधायनादिभिः । अतः यत्र स्मर्यते प्रायश्चित्तं तत्तेषामेव शाखिनां न पुनरितरेषाम्, यथा शिरोव्रतमाथर्वणिकानामेव नियम्यते तद्वत् । नेति ब्रूमः । आश्वलायनोक्तप्रायश्चित्तस्य अन्यत्रोपसंहर्तव्यत्वात् । प्रसिद्धं चेदं 'सर्वाभेदादन्यत्रेमे' (ब्र. ३. ३. १०.) 'आनन्दादयः प्रधानस्य' (ब्र. ३. ३. ११.) इत्यादिषु । एवमिहापि मानवीयादिषु स्मृतिषु गम्यते निन्दा असंस्कृतायाः रजस्वलायाः कन्यायाः । अथापि सर्वत्र तादृशकन्यायाः प्रदानं विधीयते तत्र केचित् प्रायश्चित्तानन्तरं प्रदानं स्मरन्ति । केचित् प्रदानमात्रम् । सर्वत्राविशेषेण निन्दायाः गम्यमानत्वात् क्वचिछ्रूयमाणं प्रायश्चित्तमन्यत्रापि प्रदानप्रत्यभिज्ञानादुपसंहर्तव्यमेव अघशोधनार्थम् । अत एव 'शिरःकपालीध्वजवान् भिक्षाशी कर्मवेदयन् । ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्' (याज्ञ. ३. २४३.) इत्यत्राश्रूयमाणानामपि सवनेषूदकस्पर्शनसन्ध्यावन्दनाघमर्षणा-

दीनां अन्यत्र प्राप्तानामत्रापि उपसंहारः अभ्युपगन्तव्यः इति निर्णीतमाचार्येण विज्ञानेश्वरेण न पुनर्योगीश्वरेणानुक्तमिति परित्यक्तम् । अत एव च भगवता योगीश्वरेण न केवलं 'शिरःकपाली' (याज्ञ. ३. २४३.) 'सुराम्बुघृतगोमूत्रपयसामग्निसन्निभम्' (याज्ञ. ३. २५३.) इत्यादिभिः शुद्धिमाप्नोति, किन्तु पवित्राणां मन्त्राणां जपसमुच्चयेनेति कृत्वैव 'शुक्रियारण्यकजपो गायत्र्याश्च विशेषतः । सर्वपापहरा ह्येते रुद्रैकादशिनी तथा' (याज्ञ. ३. ३०७.) इति पवित्राणां मन्त्राणां जपमस्मार्षीत् । शिरोव्रतं त्वाथर्वणिकानामेव । अन्येषां तत्स्थाने व्रतान्तरस्योपदेशेनोपसंहारे प्रयोजनाभावात् । इह तु अघशोधनात्मकस्य प्रयोजनस्य सत्वादविरोधादपेक्षितत्वाच्चाघशोधनस्य 'आनन्दादयः प्रधानस्य' (ब्र. ३. ३. ११.) इत्यधिकरणन्यायेन मानवीयादिष्वपि स्मृतिषूपसंहारः कर्तव्यः प्रायश्चित्तस्य । तस्मात् सिद्धं प्रायश्चित्तस्मरणमापत्कल्पमेवोपस्थापयति न पुनर्गौणाख्यं कल्पमिति प्रतिषेध एव शिष्यते रजस्वलाविवाहस्य स्मृतिभिरिति ।

अपि च नैवात्र विवदितव्यं कथमयं विवाहः प्रतिषिध्यत इति ; यत्कारणं निन्दापि श्रूयते स्मृतिष्वेतादृशविवाहस्य । तथा चाह भगवान् पराशरः—

'अष्टवर्षा भवेत् गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत् कन्या अत ऊर्ध्वं रजस्वला ॥ १ ॥

प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिबन्ति पितरः स्वयम् ॥

माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥ ३ ॥

यस्तां समुद्वहेत् कन्यां ब्राह्मणोऽज्ञानमोहितः ।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥ इति ॥

यदि गौणतयापि रजसोनन्तरं विवाहोऽभ्यनुज्ञायेत कथमत्र श्रूयमाणा निन्दोपपद्येत । न च गौणकाले कापि निन्दा श्रूयत इत्यवोचाम । तस्मात् रजस्वलाविवाहः प्रतिषिध्यत एव । ननु पराशरो हि भगवान सप्तमाध्याये हि शुद्धिप्रकरणे रजस्वलोद्वाहनिन्दां स्मरति ; तत् कथमृतुमतीविवाहं प्रतिषेद्धुमर्हति अविवक्षितत्वात् इति चेन्न ; 'तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि' इत्यत्रेवासंबद्धंमध्ये पठितमिति प्रकरणोत्कर्षस्य कर्तव्यत्वात् । ननु निन्दावचनैः कथं प्रतिषेधः सिध्यति । अपूर्वत्वात् विधिं कल्पयामः इति चेन्न । शुद्धिप्रकरणं ह्यारभ्य हीयं निन्दा पठ्यते न पुनरना-

रभ्याधीयते येनापूर्वत्वात् विधिरभ्युपगम्येत । अत एव 'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः' (छा. १. १. ३) इत्यत्रानारभ्याधीतत्वात् विधिरभ्युपगम्यते 'स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्' (ब्र. ३. ४. २१) इत्यधिकरणे। अनारभ्याधीतत्वमस्य निर्धारितं तन्निर्धारणाधिकरणे। इह त्वारभ्याधीतत्वात् न विधिरभ्युपगन्तुं शक्यत इति 'नहिनिन्दान्यायेन' मुख्यकालप्रशंसामेव निन्दावचनानि गमयेयुः इति। अत्र ब्रूमः। सत्यमारभ्याधीयत एव। तावता विधिर्नाभ्युपगन्तव्य इति कथमवादीः। अपूर्वत्वं हि विधिकल्पने कारणं भवितुमर्हति न पुनरारभ्याधीतत्वमनारभ्याधीतत्वं वा। अत एव 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ. ४. ४. २२.) 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ.४.४.२२) इत्यादिष्वारभ्याधीतेष्वपि विधिरभ्युपगन्तव्योऽपूर्वत्वात् संयोगस्य इति प्रपञ्चितम् 'सर्वापेक्षाधिकरणे' (ब्र.३.४.२६)। यच्च स्तुतिमात्राधिकरणं प्रपञ्चितं तत्रापि अपूर्वत्वमेव कारणं प्रदर्शितं विधिकल्पने सूत्रकृता न पुनरन्यत्। एवमिहापि आरभ्याधीतेष्वपि निन्दावचनेषु अपूर्वत्वादर्थसंयोगस्य प्रतिषेधविधिरेवाभ्युपगन्तव्यः। यदुक्तं नहिनिन्दान्यायेन मङ्ग-

च्छत इति तन्न । प्रमाणान्तरविरोधे सति नहिनिन्दान्याय: सङ्गच्छते इति प्रपञ्चितं मीमांसकै: । इह त्वसति बाधके प्रतीयमानार्थे तात्पर्यमनङ्गीकुर्वतां देवताधिकरणन्यायमवजानतां महत् पाण्डित्यम् । तस्मात् निन्दावचनेभ्य: प्रतिषेधविधिरेवाङ्गीकर्तव्य इत्युत्पश्याम: । स्यादेतत् । पराशरो हि भगवान न रजस्वलोद्वाहं प्रतिषेधति, अपि तु 'प्राप्ते तु द्वादशे वर्षे' इत्यादिवचनै: द्वादश वर्षदेशीयामप्रयच्छत: दोषं सङ्कीर्तयति । न । 'अत ऊर्ध्वं रजस्वला' इत्युक्त्वाऽनन्तरमेव 'प्राप्ते तु' इति वाक्यस्य पठितत्वात् । ननु 'अत ऊर्ध्वं रजस्वला' इति वाक्येनैकादशे वयसि रजस्वलावदशुद्धिमाप्नोति कन्या, द्वादशे वयस्यप्रदानं पितॄणां नरकहेतु:, 'माता चैव पिता चैव' इति वचनेन साक्षादेव रजोदर्शनं मात्रादीनां नरकहेतुरिति वाक्यार्थ: कथं न स्यात् । न स्यात् प्रातर्दनाधिकरणन्यायविरोधात् । तत्र हि 'त्रिविधमुपासनं प्रसज्येत जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनञ्चेति । न चैतदेकस्मिन् वाक्येऽभ्युपगन्तुं युक्तम् । उपक्रमोपसंहाराभ्यां वाक्यैकत्वमवगम्यते' इति निपुणतरमुपपादितं श्रीमद्भि: भगवत्पूज्यपादै: 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह

तद्योगात्' (ब्र. १. १. २१.) इत्यत्र । एवमिहापि त्रिविधमपूर्वं दोषकीर्तनं विवक्षितं स्यात् । भिद्येत हि तदा वाक्यम् । तस्मादन्याय्यमेवेदमर्थकल्पनम् । ननु 'अत ऊर्ध्वं रजस्वला' इति 'दृष्ट्वा कन्यां रजस्वलां' इति स्पष्टरजोदर्शनकीर्तनात् न्याय्यमेवास्मदीयमर्थकल्पनमिति । नैवं स्यात् । 'रजस्वला' इति परिभाषितत्वात् स्पष्टदर्शनस्यावैयर्थ्यापत्तेः । ननु नाद्यापि परिभाषेति सिद्धम् । नैष दोषः । आनन्दमयाधिकरणन्यायेन प्रायपाठप्रवाहे पठितस्य रजस्वलाशब्दस्य परिभाषात्वस्याभ्युपगन्तव्यत्वात् । तस्मादणुमात्रमपि रजस्वलोद्वाहं विस्मरणेनापि स्वप्नेपि वा नाभ्यनुजानाति भगवान् पराशर इति सिद्धम् । तत्प्रकोपो यथा न स्यात् तथा यतितव्यम् विशेषेणास्माभिः कलिजैः । तस्मात् प्रतिषेधबलात् अन्यत्र श्रूयमाणाभ्यनुज्ञा ज्ञापयेवेति अकामे नाप्यङ्गीकर्तव्यम् । गौणत्वाभ्युपगमे निन्दा नोपपद्येत । तस्मात् सिद्धमृतुमतीविवाहः स्मृतिषु प्रतिषिध्यत इति ॥

अथापि स्यात्— निन्दा पुनर्नोपपद्येतेति नायं दोषः । सर्वेषां निन्दावचनानामर्थवादत्वेनार्थवादानां स्वार्थे प्रामाण्याभावेन नहिनिन्दन्यायेनेतरस्य मुख्यकालस्य प्रशंसायै स्यादित्यवोचाम । भवदेतदेवं यदि निन्दैव केवलं श्रूयेत;

अपि त्विह निषेधोऽपि श्रूयते 'नोपरुन्ध्यात् रजस्वलाम्' इति, 'प्रयच्छेन्नग्निकां कन्यामृतुकालभयात् पिता' इति च । अतो निन्दावचनानि निषेधमेवोपोद्बलयेयुः । ननु नायं विधिः । 'न रजस्वलां परिणयेः' इति वचनाभावात् । तथाप्यर्थापत्त्या प्रतिषेधो भवितुमर्हति उपाकर्मणीव । तत्र हि 'औदयिके सङ्गवस्पर्शे श्रुतौ पर्वणि चार्कभे' इत्यादिवचनेन, उत्तराषाढाचतुर्दशीप्रभृतीनां वधो यथा निषिध्यते एवमिहापि 'नोपरुन्ध्याद्रजस्वलाम्' इति वचनेन प्रतिषेधमभ्युपगच्छामः । ननु तत्र हि 'नोत्तराषाढसंयुते' इत्यादिवचनैः स्पष्टं प्रतिषेध इति चेत् इहापि 'नोपरुन्ध्यात्' इत्यादिवचनैः स्पष्टमेवास्ति प्रतिषेध इति गृहाण । आस्तां तावदिदम् । अविद्यमानेऽपि स्पष्टं प्रतिषेधे निन्दावचनेभ्य एवापूर्वत्वात् विधिं कल्पयामः इति प्रपञ्चितमधस्तात् । नहिनिन्दान्यायोपि परिहृतः । अथापि भवतः श्रद्धामनुरुध्याभ्युपगच्छामोऽर्थवादत्वं निन्दावचनानां एवमप्यर्थवादोऽन्यतः सिद्धमर्थमवद्योतयति, न तु प्रापयतीति न्यायेन अत्रापि शिष्टाचारसिद्धं रजस्वलोद्वाहप्रतिषेधमेवावद्योतयतीति ब्रूमः । न च 'कथमाचारः स्मृत्या प्रत्यभिज्ञाप्येत' इति प्रहसितव्यम् । 'निवीतं मनुष्याणां प्राची-

नावीतं पितॄणामुपवीतं देवानुपव्ययते देवलक्ष्ममेव तत्कुरुते' इत्यत्र सौकर्याय लोकतः सिद्धमेव मनुष्याणां निवीतमनुवदतीदं वाक्यमिति उपवीताधिकरणे मीमांसकैः व्यवस्थापितत्वात् । तस्मादपि सिद्धमृतुमतीविवाहः शास्त्रतः प्रतिषिध्यत इति ॥

अत्रापरे प्रत्यवतिष्ठन्ते— 'त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् । ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम्' इत्याह भगवान् बोधायनः । तदेतत्प्रतीक्षणं गौणकालमेवोपस्थापयेत् । कस्मात् । तथा दर्शनात् । यथा— माधवाचार्याः 'दृष्टे तु रजसि सत्स्वपि पित्रादिषु कञ्चित् कालं प्रतीक्ष्य तदुपेक्षणेन स्वयमेव वरं वरयेत्' इत्युक्त्वा पूर्वनिर्दिष्टं बौधायनं वचनमुदाजहार । अन्यथा 'त्रीणि वर्षाणि' इति वचनोदाहरणमनर्थकमेव स्यात् । तस्मात् बोधायनो रजसोऽनन्तरं गौणमेव कालं विदधाति । ननु उपक्रमे 'अपि वा गुणहीनाय नोपरुन्ध्यात् रजस्वलाम्' इति वदन् रजस्वलायाः असंस्कृतायाः कन्यायाः निन्दां श्रावयति ; सा च प्रतिषेधे कारणं भवितुमर्हतीत्यवोचाम । तस्मादुपरितनं 'त्रीणि वर्षाणि' इति वचनमापत्कल्पमेवोवस्थापयेत् इति चेन्न । 'दद्यात् गुणवते कन्यां नग्निकां ब्रह्मचारिणे' इति

नाग्निकाद्वाह् श्लाघयित्वानन्तरं तदेव व्यतिरेकमुखेन प्रश-
सति 'अपि वा गुणहीनाय नोपरुन्ध्यात् रजस्वलाम्'
'त्रीणि वर्षाण्यृतुमती यः कन्यां न प्रयच्छति । स तुल्यं
भ्रूणहत्यायै दोषमृच्छत्यसंशयम्' इत्यादिभिर्वचनैः । अनन्तरं
'न याचते चेदेवं स्यात् याचते चेत पृथक् पृथक्' इति
श्लोकं पठित्वा अनन्तरं 'त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृ-
शासनम्' इत्यब्रवीत् । अतः प्रकरणं पर्यालोचयतां गुणव-
द्वराभावे गौणतया रजसः प्रादुर्भावानन्तरं वर्षत्रयं यावत्
प्रतीक्षणं विधीयत इति स्फुटमेव । न चेदं प्रकरणं गुणवते
ब्रह्मचारिणे नग्निकाप्रदानमेव व्यतिरेकमुखेन प्रशंसतीति
प्रत्यवस्थातव्यम् । 'त्रीणि वर्षाणि काङ्क्षेत' इत्यस्य वैयर्थ्या-
पत्तेः । न चाऽयं न विधिः, अर्थवादोऽयमिति वाच्यम् ।
अनुपपन्नत्वात् । 'नोपरुन्ध्यात रजस्वलां' इति रजस्वलोप-
रोधो दोष इति सामान्यतो ज्ञायमानः विशेषमाकाङ्क्षते । सो-
ऽयं विशेषः उपरितनवाक्येन पूर्यते 'त्रीणि वर्षाण्यृतुमतीं यः
कन्यां न प्रयच्छति' इत्यनेन । सोऽयं भ्रूणहत्यारूपो दोषः र-
जोदर्शनानन्तरं त्रिवर्षात्यय एव भवतीति स्फुटे वाक्यार्थे क-
थमापत्कल्पतयाऽस्य सङ्कोचः सङ्गच्छेत । अत एवेदं प्रकरणं
व्याचक्षाणो गोविन्दस्वामी 'ऋतुमत्याः कन्यायाः अप्रदाने

भ्रूणहत्यातुल्यो दोषो भवतीत्येतद्वक्तुकामः कन्यादानप्रकरणमारभते' इत्यब्रवीत् । अपि च वर्षत्रयमध्येपि यदि याचमानाय गुणवते वराय न ददाति तदैव पित्रादेः भ्रूणहत्यादोषं प्रशास्ति भगवान् बोधायनः 'न याचते चेदेवं स्यात्' इति वचनेन । सर्वमिदमालोच्यैव 'अप्रयच्छन समाप्नोति भ्रूणहत्यामृतावृतौ' (याज्ञ. १. ६४.) इति वचनं व्याख्यायन् 'एतच्चोक्तलक्षणवरसंभवे वेदितव्यम्' इत्याह श्रीमान् विज्ञानेश्वरो मिताक्षरायाम् । तस्माद्रजसोऽनन्तरं विहित. कालः गौणो भवितुमर्हति । ननु नायं गौणो भवितुमर्हति, तद्वाचकपदाभावात् । नेति ब्रूमः भवत्पक्षेपि वाचकपदाभावात् । तर्हि विनिगमनाविरह इति चेन्न । उक्तहेतुभिः गौणकालस्य स्पष्टं प्रतीयमानत्वात् । तस्मात् 'त्रीणि वर्षाण्यृतुमती काङ्क्षेत' इति वचनेन गौण एव कालो विधीयत इति । एवं प्राप्ते ब्रूमः—— नानेन वचनेन गौणकालो विधीयत इति । कस्मात् । प्रमाणाभावात् । तथा हि 'दद्यात् गुणवते कन्यां नग्निकां ब्रह्मचारिणे' इति गुणवते वरायाप्रौढां दद्यात् इति विधाय गुणवद्वरलिप्सया कदाचिदयं कालमतिपातयेदिति शङ्कित्वा स एव भगवानब्रवीत् 'अपि वा गुणहीनाय नोपरुन्ध्यात् रजस्वलाम्' इति । रजस्व-

लोपरोधनिषेधपूर्वकं गुणहीनायापि दानमुक्त्वा पुनः स एव कथं गुणवद्वरलिप्सया वर्षत्रयप्रतीक्षणमृतोरनन्तरं विदधातीत्यभ्युपगन्तुं प्रभवामः, विप्रतिषेधात् । ननु ‘अपि वा गुणहीनाय’ इति वचनं गुणवद्वरालाभे अस्तु ‘अविद्यमाने सदृशे गुणहीनमपि श्रयेत्’ इत्युपसंहारे दर्शनादिति चेन्न । नोपरुन्ध्यात् रजस्वलाम’ इति वाक्यशेषविरोधात् । न चायमर्थवादो नग्निकाविवाहप्रशंसार्थे स्यादिति वाच्यम्; ‘नोपरुन्ध्यात्’ इति प्रतिषेधविधेः श्रूयमाणत्वात्; यथाश्रुतिगृहीतार्थभङ्गप्रसङ्गेन देवताधिकरणन्यायविरोधाच्च । अपि च किं ‘अपि वागुणहीनाय’ इत्ययमर्थवादः आहोस्वित् ‘नोपरुन्ध्यात् रजस्वलाम्’ इति अथवोभयमपीति तावत् पृच्छामः । यद्याद्यः तर्हि नोपरुन्ध्यात् इति विधिः प्रतिषेधात्मको भवितुमर्हति; अथ द्वितीयः तर्हि अपि वा गुणहीनाय’ इत्यत्र विधिरङ्गीकर्तव्य इति गुणद्वरलिप्सया प्रतीक्षणप्रत्याशा भज्येत । उभयमप्यर्थवाद इति यद्युच्येत तर्हि कं नामार्थं वदतीति वक्तव्यम्; अपि च ‘अपि वा’ इति पक्षान्तरविधानद्योतकौशब्दौ पीडितौ स्याताम् । वयं तु पश्यामः रजस्वलानुपरोधपूर्वकं गुणहीनायापि प्रदानं पक्षान्तरेण विदधातीति । नन्वत्र सामान्यतो ज्ञायमानो दोषो विशेषमाकाङ्क्षते स च विशेषो-

ऽनन्तरवचनेन पूर्यत इत्यवोचाम ; 'बाढमवोचः, नैतद्व्याख्य-मुत्पश्यामः ; 'तथाहि— न हीदं, 'नोपरुन्ध्यात् रजस्वलाम्' इति वचन विशेषमाकाङ्क्षते । प्रतिषेधवचनं हीदं, न पुनर्दोषस्मारकं 'कालेऽदाता पिता वाच्यः (मनु.९.४.) इतिवत् । अथोच्यते प्रतिषेधबलादेव दोषमनुमिमीमहे दर्वीहोमन्यायेनेति, तदपि न संगच्छते । उत्तरत्र 'त्रीणि वर्षाण्यृतुमती' इति दोषस्मारकवचनोपलम्भेन वाक्यभेदप्रसङ्गात् । तस्मान्नात्र दर्वीहोमन्यायस्यावकाशः । तर्हि 'त्रीणि वर्षाणि' इति वाक्योदित वर्षत्रयप्रतीक्षणं नोपपद्येतेति चेत् समान एवायं दोषः श्रीमतामपि पक्षे । यदि गुणवद्वरलिप्सया प्रतीक्षणम्, तर्हि 'त्रीणि वर्षाणि' इति मर्यादाकरणमनुपपन्नम् । कदाचित् तावतापि कालेन गुणवद्वरो न लभ्येत । यावद्गुणवद्वरलाभस्तावदेव प्रतीक्षणं न्याय्यं भवितुमर्हति । अपि च गुणवद्वरलिप्सया प्रतीक्षणमभ्युपगच्छताम् 'दद्यात् गुणवते कन्यां नग्निकां ब्रह्मचारिणे' इति वाक्यं मुख्यकालं विदधातीति वाचारंभणमेव । यदा हि गुणवान् वरो लभ्यते तदैव मुख्यकालो भवति । नात्र वयोवस्थाविशेषादिनियमः संगच्छते इति सुधियो विभावयन्तु । तस्मादसङ्गतमिदं प्रत्यवस्थानम् । कामश्चेदं वचनं विशे-

षमाकाङ्क्षताम्, कामश्चानन्तरवचनेन पूर्यताम्, एवमपि न सर्वात्मना दोषाद्विनिर्मोक्षः । गुणवद्वरलिप्सया वर्ष-त्रयं यावत् प्रतीक्षमाणस्य 'अपि वा गुणहीनाय' इति व्याकोपो दुष्परिहार एवेत्यधस्तादवोचाम । तस्मादन्याय्य-मेवेदमपूर्वमेकवाक्यतासंपादनम् । परमार्थतस्तु 'दद्यात् गु-णवते कन्यां नग्निकां ब्रह्मचारिणे' इति मुख्यकालं विधाया-नन्तरम् 'अपि वा गुणहीनाय नोपरुन्ध्यात् रजस्वलाम्' इति गौणोपि कालः विधीयते । अनन्तरं निन्दापुरस्सरं आपत्कल्पं विधातुं प्रवर्तते 'त्रीणि वर्षाण्यृतुमती' इत्या-रभ्य इत्येवाभ्युपगन्तव्यमन्यथानुपपद्यमानत्वात् । यद्गोवि-न्दस्वामिवचनं तदस्माकमेवानुकूलम् । 'अप्रदाने ऋतुम-त्याः कन्यायाः (तिष्ठन्त्याः) दोषो भवति' इत्यन्वयसं-भवात् । ननु रजसोनन्तरं विधीयमानस्यापत्कल्पत्वे 'त्री-णि वर्षाणि काङ्क्षेत' इति प्रतीक्षणं नोपपद्येतेति चेन्न । पित्रादीनां तावदेवापत्कल्पेपि अधिकारः इति प्रद-र्शयितुं प्रवृत्तत्वात् तस्य । ननु 'ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम्' इत्यनन्तरवचनेन कन्यायाः अपि चतुर्थ एव वर्षेऽधिकारः, ततो नेति स्यात् इति चेन् भ्रान्तोसि । नानेन वचनेन तदनन्तराः पञ्चमादयो वत्सराः

स्वयंवरे प्रतिषिध्यन्ते; भिद्येत हि तदा वाक्यम् । अत एव 'असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे' इति नारदवचनानन्तरं आत्मनः पाणिमग्राहयत् इति शल्यपर्वणि श्रूयमाणं वृद्धकन्योपाख्यानं सङ्गच्छते । संस्कारात्मकत्वात् विवाहस्य पञ्चमादिवत्सराः स्वयंवरे न प्रतिषिध्यन्ते । तस्मात् सिद्धमृतुमतीविवाहः आपदि विहितः कल्प इति । यदुक्तं माधवाचार्याः अब्रुवन्निति तदापत्कल्पमेव ब्रवीतीति तद्वचनस्वारस्यादवगम्यते 'दृष्टे तु रजसि' इति तु शब्दस्वारस्यात् । यदपि विज्ञानेश्वराचार्याणामनुधावन तदपि नाभीष्टं पुष्णाति । 'एतच्चोक्तलक्षणवरसंभवे वेदितव्यम्' इत्यत्र सर्वनाम्नैतच्छब्देन पूर्वनिर्दिष्टो भ्रूणहत्यारूपो दोषो भवत्यप्रयच्छताम्, अतोऽवश्यं काले प्रदातव्या कन्येत्येव प्रतिपादयति । न पुनर्ऋतुमत्या अपि विवाहं संशास्त्यनेन वचनेन; भिद्येत हि तदा वाक्यम् । अपि च 'अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ' इत्यत्रर्तुग्रहणेन प्राग्रजोदर्शनादेव विवाहकालः न पुनस्तदनन्तरमिति व्यङ्ग्यमर्यादया प्रतिपादयति भगवान् याज्ञवल्क्यः । तस्मादप्यसङ्गतं परेषां प्रत्यवस्थानम् ॥

स्यादेतत्— वसिष्ठो हि भगवानृतुमतीविवाहमेव मुख्य-

मभिप्रैति । यत्कारणम् 'कुमार्यृतुमती त्रीणि वर्षाण्युपासीत; ऊर्ध्वं त्रिभ्यो वर्षेभ्यो विन्देत् तुल्यं पतिम्' इत्याह । न च 'प्रयच्छेन्नग्निकां कन्यामृतुकालभयात् पिता' इत्युक्तरत्र दर्शनात् आपत्कल्पोऽयमिति प्रत्यवस्थातव्यम् । यत्कारणं 'अत्राप्युदाहरन्ति' इत्यारभ्य परेषां हि मतमुत्तरत्र ब्रवीति । तस्मात् आत्मीयेन मतेनर्तुमतीविवाह एव श्रेयान् इति वसिष्ठेन प्रकटितत्वात् साधुरेवायमृतुमतीविवाह इत्येवं प्राप्ते ब्रूमः—— नैतदेवमिति । कस्मात् प्रमाणाभावात् । तथा हि—— 'प्रयच्छेन्नग्निकां कन्यामृतुकालभयात् पिता । ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति' इति प्राग्रजोदर्शनात् विवाहं विधायानन्तरं दोषस्वरूपमपि विस्तरेण कथयति 'यावन्त्र कन्यामृतवः स्पृशन्ति तुल्यैः सकामामभियाच्यमानाम् । भ्रूणानि तावन्ति हतानि ताभ्यां मातापितृभ्यामिति धर्मवादः' इति । ननु एकीयमतमेतदित्यवोचाम । बाढमवोचः । न युक्त्युपेतमवोचः । 'ऊर्ध्वं त्रिभ्यो वर्षेभ्यो विन्देत् तुल्यं पतिम्' इति स्वयंवरमुक्त्वात्रापि कारणं प्राचीनाः ब्रुवन्ति इति वदन् 'पितुः प्रमादात्तु यदीह कन्या वयःप्रमाणं समतीत्य दीयते । सा हन्ति दातारमदीयमाना कलातिरिक्ता गुरुदक्षिणेव' इति वचनमुदाहरति; न पुनः

'प्रयच्छेत्' इत्यादिकमपि, असंबन्धात्। अथापि भवतः श्रद्धामनुरुध्याभ्युपगच्छामः 'प्रयच्छेन्नग्निकां कन्याम्' इत्यादिकमपि परेषां मतमिति एवमपि आत्मीयमेवाभिप्राय परमतापदेशेन प्रकाशयति इत्यङ्गीकुर्मः, अन्यथानुपपद्यमानत्वात्। अस्त्वेवम्; तथापि पाठक्रमेणोपक्रमप्राप्तः मुख्यकालो भवतु, 'प्रयच्छेत्' इत्यादिकः पुनः गौणः स्यात्। नेति ब्रूमः 'प्रयच्छेत्' इत्यत्र 'ऋतुकालभयात् पिता। ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति' इति वाक्यशेषविरोधात्। तस्मात् अर्थक्रमानुसारेणोपक्रमस्थविधानमापदेव भवितुमर्हति। अत एवैतदेव 'कुमार्यृतुमती' इत्यादिवचनं स्वयंवरविषयमित्याह सर्वतन्त्रस्वतन्त्रः श्रीमान् हेमाद्रिः। यदत्र 'सकामामभियाच्यमानाम्' इत्यादिवचनावष्टम्भेन 'गुणवद्वराल्लाभे' इत्याद्यर्थः कैश्चित् समाकृष्यते। तदपि बौधायनविचारोक्तदिशा परिहारमर्हतीति दिक्। तस्मादप्यसङ्गतं परेषां प्रत्यवस्थानम्॥

अथापि स्यात्— 'काममामरणात् तिष्ठेत् गृहे कन्यर्तुमत्यपि। न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्' (मनु ९.८९.) इत्यगुणवते प्रदानं निन्दित्वानन्तरम् 'त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती। ऊर्ध्वं तु कालादेतस्मात्

विन्देत सदृशं पतिम्' (मनु. ९. ९०.) इत्यब्रवीत् भगवान् मनुः। तदनुरोधेन बौधायनं वचनं व्याख्येयमिति चेत्, वयमपि बोधायनानुरोधेनमनुवचनमपि व्याख्यायतामिति ब्रूमः। मनोर्माहात्म्यं श्रुतिरपि प्रख्यापयतीति तदनुरोधः कर्तव्यः इति यद्युच्येत तदपि न सङ्गच्छते। भवेदेतदेवं यदि भगवता मनुना गौणतयापि स्त्रीणां रजमानन्तरं विवाहोऽभ्युपगम्येत। तदेव तु न संभवति। प्रथमम् 'उत्कृष्टायाभिरूपाय वराय सदृशाय च। अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि' (मनु. ९. ८८.) इत्युत्कृष्टाय वराय प्रदानं प्रशास्ति; पुनस्तदेव प्रकारान्तरेण प्रशंसति 'गुणहीनाय न दद्यात्' इति। तत्र हि पठ्यते 'काममामरणात्' इति वाक्यम्। नानेन वचनेन गुणहीनायाप्रदानं आमरणमृतुमत्याः कन्यायाः पितुर्गृहे अवस्थानं चेत्यर्थद्वयं विधीयते, भिद्येत हि तदा वाक्यम्। 'तिष्ठेत्' इति च नायं विधिः; किन्तु औदुंबराधिकरणन्यायेन विधिवन्निगदोऽयमर्थवादो भवितुमर्हति। अपि चाग्रेपि 'स हि स्वाम्यादतिक्रामेत् ऋतूनां प्रतिरोधनात्' (मनु. ९. ९३) इति स एव भगवानब्रवीत् ऋतूनां प्रतिरोधनेन पित्रादीनां स्वामित्वमपैतीति। कथमिदं गौणत्वाभ्युपगमे सङ्गच्छेत। न

हि गौणकाले पित्रादीनां स्वामित्वमपैतीति क्वापि कर्मान्तरेषु दृष्टम् । ननु वर्षत्रयादूर्ध्वं हि पित्रादीनामधिकारो नास्तीत्यनेन वचनेन ज्ञायते, प्रकरणात् ॥ भवत्वेवं तथापि कथमृतूनां प्रतिरोधनमधिकाराभावे कारणमब्रवीत् यद्यनन्तरमृतोः कालो गौणः स्यात् । न हि गौणकालस्य निन्दोपपद्यत इति प्रागेवावोचाम । अपि च 'काममामरणात् तिष्ठेत' इत्यत्र कामशब्दापिशब्दाभ्यां असंस्कृताया ऋतुमतीत्वं निन्द्यमेवेति वचनस्वारस्यादवगम्यते । तस्मात् 'त्रीणि वर्षाण्युदीक्षेत' इति वचनमन्यथानुपपद्यमानमापत्कल्पमेव विदधातीति अभ्युपगन्तव्यम् ॥

अपि च 'न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्' इत्यत्र यदि प्रतिषेधात्मको विधिरभ्युपगम्येत 'अपि वा गुणहीनाय (दद्यात्)' इति बौधायनोक्ताऽभ्यनुज्ञा पीड्येत । तस्मात् केवलमर्थवादोऽयं व्यतिरेकमुखेन प्राक्तनश्लोकोक्तमुत्कृष्टवरप्रदानमेव प्रशंसतीत्युत्पश्यामः । न क्वापि गुणहीनाय प्रदत्ता कन्येति प्रायश्चित्तमनुश्रूयमाणं विहितं वोत्पश्यामः, इत्येतदप्यत्रार्थवादत्वे कारणं द्रष्टव्यम् । एवं 'विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्ष्व' इत्यत्र यथात्यन्तनिन्दितं विषभक्षणमिति वचनव्यक्त्या गम्यते एवमिहापि 'का-

ममामरणात् तिष्ठेत् गृहे कन्यर्तुमत्यपि’ इत्यत्रासंस्कृतायाः ऋतुमतीत्वमत्यन्तनिन्दितमित्यर्थात् गम्यते । अन्यथा ‘अपि वा मातरं गच्छेदामंतु न कदाचन’ इत्यत्रापि मातृगमनं कचिदनुज्ञायते इत्यभ्युपगन्तव्यं स्यात् । अपि च दशमाध्याये ‘सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु । आनुलोम्येन संभूताः जात्या ज्ञेयास्त एव ते’ (मनु. १०. ५.) इत्यत्रानृतुमत्या एव पत्नीत्वं अभिनन्दति ; न पुनर्विपरीतम् । तस्मान्न गौणतया ऋतुमतीविवाहं मनुरभिप्रैतीत्यङ्गीकर्तव्यम्—

स्यादेतत् । ‘सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ॥
आनुलोम्येन संभूताः जात्या ज्ञेयास्त एव ते । (म.१०.५.)

इति वचनेनाक्षतयोन्या एव पत्नीत्वमभिनन्दति । न पुनरनृतुमत्याः । ननु अक्षतयोनिः ‘ऋतोः प्राचिभवे वयसि वर्तमाना’ इति प्रथममेवावोचाम भूमौ । बाढमवोचः । तत्तु कथमुच्छ्वसितुमपि प्रभवति श्रीमद्विमर्शग्रन्थानुसारिषु जीवत्सु । तत्र हि विमर्शे अक्षतयोनिरस्पृष्टमैथुनेति विज्ञानेश्वरापरार्कमेधातिथिप्रभृतीनां महतामनुरोधेन व्यवस्थापितं किमिति नोत्पश्यसि । अत्र वदामः । सत्यं नोत्पश्याम एव । तथा हि— ‘पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ।

नाकन्यासु क्वचिन्नृणां लुप्तधर्मक्रिया हि ताः' (मनु. ८.२२६.) इत्यत्र अकन्या प्राप्तरजस्कैव; क्षतयोनिशब्दश्च तत्र कुल्लूकभट्टेनोक्तः तमेवार्थं ब्रवीतीति भूमिकायामेवावोचाम। तमेवार्थमनुवदन् जातिलक्षणकथनावसरे दशमाध्याये अक्षतयोनिशब्दं प्रायुङ्क्तेति अप्राप्तरजस्कैवेत्यस्यार्थोऽङ्गीकर्तव्यः। अत एव कुल्लूकभट्टः 'स्वभार्यायां कन्यावस्थायामेव कृतविवाहसंस्कारायाम्' (मनु. ५—१६६.) इत्यब्रवीत्। न चात्रापि कन्याशब्दस्य अविवाहितेत्यर्थः अभ्युपगन्तुं शक्यते भवता। 'कन्यावस्थायाम्' इति विरोधात्। न हि स्त्रीणां कापि अविवाहितावस्थेति काचिदवस्था शरीरसंबन्धिनी श्रूयते अनुभूयते वा। अपि च वाक्यशेषविरोधः दुष्परिहारः। 'अविवाहितावस्थायामेव कृतविवाहसंस्कारायाम्' इति कथं संभवति। तस्मात् कन्यात्वमिति स्त्रीणां शरीरसंबन्धिनी काचिदवस्था भवति तदैव कृतविवाहसंस्कारायाम्' इति टीकाकारोऽभिप्रैतीति अभ्युपगन्तव्यम्। यदत्र 'कन्यावस्थायामेव कृतविवाहसंस्कारायाम्' इति टीकाकारेणोक्तं तदेव भगवानाह 'सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु' इति। 'याः पुनरक्षतयोनय एव पत्नीत्वमापन्नाः' इति तस्यार्थो भवितुमर्हति। तदेव 'कन्यावस्थायामेव

कृतविवाहसंस्कारा ' इति व्याख्यातमाचार्येण ; अत: ' अक्षतयोनि: कन्यावस्थायां वर्तमाना इति सिद्धं । एवंस्थिते कथमत्राक्षतयोनिरस्पृष्टमैथुना स्यात् ॥ न ह्यस्पृष्टमैथुन्यामिति काचिदवस्था स्त्रीणां संभवति । अवस्थाया: अन्तरेणबाह्यसंबन्धं तत्तत्कालेन शरीरे संभाव्यमानत्वात् ; यथा बाल्यस्थाविरादिका । पुरुषसंबन्धो ह्यागन्तुक: न तु शारीर: । शारीरा तु स्त्रीणां कन्याख्याऽवस्था । तस्मादप्राप्तरजस्कैव अक्षतयोनिरित्येवार्थे परिगृहीते 'सर्ववर्णेषु' इति वाक्यमुपपन्नं भवति । ननु ' सर्ववर्णेषु ' इति व्याख्यानावसरे नैतत् ' कन्यावस्थायामेव' इत्यादिवाक्यमुपलभामहे व्याख्याने ; अतस्तदस्तीत्युदाहरणं प्रतारणायैव केवलं स्यात् इति चेन्न । न वयं तत्रैव कुल्लूकभट्टवचनमस्तीत्यवोचाम । किन्तु टीकाकार: एवमब्रवीत् इत्येवावोचाम । कुत्राब्रवीदिति चेत् ब्रूम: । औरसादिपुत्रकथनपरे ' स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम् । तमौरसं विजानीयात् पुत्रं प्रथमकल्पितम् ' । (मनु. ९. १६६.) इत्यत्र ' स्वभार्यायां कन्यावस्थायामेव कृतविवाहसंस्कारायां यं स्वयमुत्पादयेत् तं पुत्रमौरसं मुख्यं विद्यात् ' इत्यब्रवीत् । अतो ब्रूमो दशमाध्यायस्थितमेव ' सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु' इति वाक्यं दृष्टान्तेवं 'कन्यावस्थायामेव' इति

व्याख्यानमकरोदिति । तस्मादपि 'पाणिग्रहणिका मन्त्राः' इत्यत्र श्रूयमाणः कन्याशब्दस्तादृशावस्थायामेव वर्तमानामर्थादनृतुमतीमेवावद्योतयतीति ब्रूमः ॥

स्यादेतत् 'सर्ववर्णेषु तुल्यासु' इतिवाक्येन विहितो विवाहः मुख्यः स्यात् । न च कथमिदं विवाहविधायकं वाक्यं स्यात्, 'उद्वहेत द्विजो भार्यां' ( मनु. ३. ४. ) इति स्पष्टमेव विधेः श्रूयमाणत्वादिति प्रत्यवस्थातव्यम् । 'परामर्शं जैमिनिरचोदनाचापवदति हि' (ब्र.३.४.१८.) इत्यधिकरणन्यायेन विद्यमानमपि विधिमनादृत्य अपूर्वत्वादर्थसंयोगस्य कृत्वाचिन्तया कल्प्यमानेपि विधौ दोषाभावात् । 'त्रीणि वर्षाण्युदीक्षेत' इति वाक्येन रजसोऽनन्तरं विवाहः विधीयमानः गौणो भवतु । तत्र किं तत्र छिन्नम् । अत एव श्रीमान् माधवाचार्याः 'यः पुरुषः विहितानुष्ठानं प्रतिषिद्धवर्जनम्, प्रमादकृतपापस्य प्रायश्चित्तं कर्तुं शक्तोऽपि न कुर्यात्, तद्विषयाणि 'भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता' इत्यादिवचनानीत्यब्रुवन । नैवं स्यात् । मुख्यकालो हि गर्भाष्टमं वयः इति प्रागेवावोचाम । तदनन्तरं यावद्रजोदर्शनमेव कालो गौणो भवितुमर्हति अन्यथानुपपद्यमानत्वात् । अस्मादेव कारणात् 'त्रीणि वर्षाण्युदीक्षेत'

इति वाक्यमापत्कल्पमेव विदधातीत्यकामेनाप्यभ्युपगन्तव्यम् । यत्तु विज्ञानेश्वरादीनामनुधावनं तदपि नास्माकं प्रतिकूलं भवति । भवत्वन्यत्र अक्षतयोनिशब्दस्यास्पृष्टमैथुनेत्यर्थः । मनुस्मृतौ तु श्रूयमाणोऽयं शब्दः अन्यथानुपपत्त्या व्याख्यानेन चाप्राप्तरजस्कामेव ब्रवीतीति अवश्यमङ्गीकर्तव्यम् । यदपि माधवाचार्याणामनुधावनं तदपि नाभीष्टं पुष्णीयात् । अशक्तस्य पापं नास्तीत्येव तेषां वचनादवगच्छामः । न चैतावता रजस्वलोद्वाहमप्यनुजानातीत्यमूढोऽध्यवस्यति, भिन्नेत हि तदा वाक्यम् । अत एव व्यवहारकाण्डे 'केरलदेशे ऋतुमती विवाहो न दोषाय' इति ब्रुवन् स एव माधवाचार्यः केरलवासिनामेवर्तुमतीविवाहमनुजानाति, न पुनः परेषां । अत्रापि देशभेदेन दोषाभावस्मरणं लौकिकेष्वेवदायभागादिषु न पुनरलौकिकश्रेयःसाधनभूतेषु चोदनालक्षणेषु धर्मेषु । इतरथा होलाकाधिकरणन्यायविरोधः प्रसज्येत । यथा चैतत् तथा व्यवहारकाण्डं पर्यालोचयतां स्फुटमेव । तस्मात् सिद्धमृतुमतीविवाहं प्रतिषेधत्येव भगवान् मनुरित्यसङ्गतमेव परेषां प्रत्यवस्थानम् इति सिद्धम् । एतेनापरे स्मर्तारो व्याख्याताः— तदेवं प्रायश्चित्तनिन्दानिषेधैस्त्रिभिर्हेतुभिः प्रौढोद्वाहः प्रतिषिध्यत एव स्मृतिभिरिति सिद्धम् ।

तस्मात् श्रुतिस्मृतीतिहासपुराणलोकेभ्यः प्रतिषिध्यमानमृतु-मतीविवाहं श्रुतिसिद्धमिति प्रतिष्ठापयितुं प्रवर्तमानाः श्रेयो-द्वारमेव बाधन्ते । अत्र वयोनिर्णयोक्ताः सकरुणमुक्तयः अ-नुसन्धेयाः । इति सर्वं शिवम् ॥

बाणरामगजैकाब्दे १८३५ प्रमादीनामवत्सरे ।
मासि भाद्रपदेऽष्टम्यां संपूर्णेयं कृतिः शुभा ॥

इति श्रीविश्वजिन्महाव्रतसर्वतोमुखवाजपेयाद्यनेकमहाक्रत्वनुष्ठानेन
पवित्रीकृतात्मना पञ्चनदक्षेत्रे कनकजानगरे लब्धजन्मना ब्रह्म-
सूत्रज्ञताना कृतकृत्याना अस्मत्तातचरणानामशेषविद्या-
गुरूणा श्रीबालकृष्णसत्विनामन्तेवासिना ताम्रात्तर-
द्विण्या. परिसरवर्तिनि मलयाचलसानुनि
कटय ग्रामे कृतावतारेण वाधूलकुल
मुक्तामणिना परममाहेश्वरेण श्रीगुरुस्वामि
शास्त्रिणा सूनुना नटेशेन विरचितायां
परिणयमीमांसायां स्मृत्यर्थविचारो नाम

तृतीयोऽध्यायः ॥

**समाप्तश्चायं ग्रन्थः ॥**

॥ श्रीः ॥

# ॥ विद्वद्वर्याणां अभिप्रायः ॥

---

शेषं समावेशनसूत्रमत्र

विवृण्वतो विद्वदपश्चिमस्य ।

नटेशनाम्नो विदुषो विशालां

मतिं मनो मेऽद्य महीकरोति ॥ १ ॥

कुम्भकोणम् } इत्थं अद्वैतसभापण्डितः, **क. कृष्णशास्त्री ।**

---

# शुद्धिपत्रिका ॥

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | २ | स्मृा | स्मृ |
| ३ | १६ | कश्चिनृ | कश्चिन्नृ |
| ४ | १३ | कन्या | कन्या |
| ८ | १३ | अक्षयो | अक्षतयो |
| १० | १ | ८१ | ८ |
| १३ | ८ | १५ | २५ |
| १६ | १४ | मत्र: | मन्त्र: |
| १८ | १० | तथानो | तथानु |
| २२ | ३ | लुस्यत | लुप्यत |
| २३ | १८ | य | य: |
| २४ | २ | समासवेशन | समावेशन |
| २७ | ६ | पुनाऋ | पुनर्ऋ |
| ,, | ८ | व्यवायो | व्यवाय: |
| २९ | १२ | गमनपि | गमनमपि |
| ३२ | १८ | कृताया | कृताया: |
| ३७ | ११ | प्रामाण | प्रमाण |
| ४० | १ | स्मृतीरिव | स्मृतय इव |
| ४२ | १५ | सिद्ध्यते् | सिद्ध्यंत् |

| | | | |
|---|---|---|---|
| ४४ | १६ | श्रत्या | श्रुत्या |
| ,, | ,, | अहोस्वित् | आहोस्वित् |
| ५२ | १५ | ग्रायश्चित्त | प्रायश्चित्त |
| ५३ | ६ | सुमुच्चय | समुच्चय |
| ,, | ८ | ३०७ | ३०८ |
| ,, | १० | व्रातान्त | व्रतान्त |
| ५७ | १८ | नहिनिन्द | नहिनिन्दा |
| ,, | १९ | भवदेत | भवेदेत |
| ५९ | १ | देवानुप | देवानामुप |
| ,, | ३ | उपवीत | निवीत |
| ,, | १८ | वस्थाप | पस्थाप |
| ७३ | ७ | श्रूयमाणात्वा | श्रूयमाणत्वा |
| ७४ | ५ | माघचा | माधबाचा |
| ,, | १३ | अलौलिक | अलौकिक |
| ७५ | १ | लोकेभ्य: | लोकै: |
| ७५ | ५ | दीनाम | दिनितु |

# Marriage Ceremonials

A DIALOGUE

BY

R. KRISHNAMACHARIAR, M.A.,

(Vidyanidhi)

SRI VANI VILAS PRESS

SRIRANGAM

12S1 |-

॥ श्रीः ॥

# ॥ पाणिग्रहणम् ॥

*

**सत्यवती**— सखि, अद्य सुप्रभातम् । चिरात् दृष्टासि ।

**कान्तिमती**— वर्धतां नः सौहार्दम् । सावित्रीकथाश्रवणादारभ्य भूयोऽपि त्वद्दर्शनाय बलवदुत्कण्ठितं मे हृदयम् ।

**सत्यवती** — तादृशीनां पतिव्रतोत्तमानां स्मरणमेव सत्त्वोन्मेषं जनयति तमोऽभिभूतानामपि ।

**कान्तिमती**— सत्यम् । तदाप्रभृति अस्माकं समयाचाराणां स्वरूपं ज्ञातुं अभिलाषः समजनि ।

**सत्यवती**— कस्मिन् विषये ?

**कान्तिमती**— तदानीं प्रसक्ता विवाहमन्त्राणां सारस्त्वया कथितः किल ।

**सत्यवती**— अथ किम् ।

**कान्तिमती**— तत्र वधूवराभ्यां अन्योन्यमेवं वर्तितव्यमिति

अनुशिष्टं किल । कथमिव तत् अर्भकप्रायैः वरैः वधूभिश्च ज्ञातुं शक्यते ?

**सत्यवती**— अत एवोच्यते शैशवं अतिक्रान्तानामेव पाणिग्रहणविधौ अधिकारः इति आधुनिकैः ।

**कान्तिमती**— सूत्रकाराणां आशयः किल प्रथमं ज्ञातव्यः ।

**सत्यवती**— विशिष्य आशयो न प्रकाशितः कुत्रापि तैः त्रिकालवेदिभिः अस्मिन् विषये । पाणिग्रहणविधानं तदन्तर्गतानां मन्त्राणां च अर्थः त्वया सूक्ष्मदृष्ट्या अवगन्तव्यः ।

**कान्तिमती**— तदत्रभवत्येव सर्वमुपदिशतु मे ।

**सत्यवती**— सखि, कथयामि यावन्मे विदितम् । प्रथमं वेदमधीत्य स्नातेन वरेण आप्ताः सुहृदः चत्वारो मन्त्रज्ञाः कन्यां वरयितुं प्रेषणीयाः ।

**कान्तिमती**— नाहमवगच्छामि औचित्यमत्र । यदन्यदीयचक्षुषा वरणं वल्लभायाः इति नातःपरं कष्टतरमस्ति वधूवरयोः । किमिति वरः स्वयमेव गत्वा न वृणोति आत्मनः प्रेयसीम् ?

**सत्यवती**— कदाचित् केवलेन रूपेण मोहितो वरः असदृशगोत्रजां असतीसमुत्पन्नां अज्ञानेन उद्वहेत् इति कृत्वा आप्ताः सुहृद एव अत्र साधीयः प्रमाणम् इति महर्षी-

णामाशयः— इति अनुमिनोमि ।

**कान्तिमती**— 'यस्यां मनश्चक्षुषोः निबन्धः तस्यां ऋद्धिः' इति सूत्रकाराः 'न ह्याकृतिः व्यभिचरति शीलम्' इति कार्तान्तिकाश्च समामनन्ति ।

**सत्यवती**— किमेतावता? आम्नानामार्याणां अन्तःकरणप्रवृत्तिरेव अस्मिन् वरणकर्मणि प्रमाणमिति मया अवगम्यते ।

**कान्तिमती**— सत्यम् । 'दाराः पितृकृताः' इति मैथिल्यां राघवस्य बहुमानातिशयः इति वाल्मीकिर्वर्णयति । अस्मिन्काले तु प्रायेण सर्वेऽपि स्वार्थपराः सुहृदो नाम भूत्वा वञ्चयन्ति वधूवरौ— इति नायं सूत्रकाराणामपराधः ।

**सत्यवती**— 'इयं सीता मम सुता सहधर्मचरी तव' इति सूक्तिं अनुसंदधता अस्माकं दारग्रहणं धर्माचरणाय न तु भोगाय इति विशदीभवति किल ।

**कान्तिमती**— पुरा किल धर्मं अन्ववर्तत कामः । अधुना तु कामं अनुवर्तते धर्मः इति महायनं भेदः ।

**सत्यवती**— ततः पित्रादिः वधूकुलं प्राप्ताय वराय कन्यां उदकपूर्वं ददाति । मधुपर्कप्रदानेन यथार्हं संभावयति च जामातरम् ।

**कान्तिमती**-- सखि, किमर्थं उदकपूर्वकं दीयन्ते सर्वाण्यपि दानानि ?

**सत्यवती**-- अप्सु सर्वा देवताः प्रतिष्ठिताः इति देवतासाक्षिकं प्रदीयते दानम् इति तर्कयामि । नारा (आपः) अयनम् (स्थानम) यस्य इति व्युत्पत्तिं आमनन्ति किल निगमविदो नारायणशब्दस्य ।

**कान्तिमती**— द्रवद्रव्यमिदं स्थलात् स्थलान्तरं प्रयाति इत्यतो हेतोः दीयमानायाः कन्यकायाः स्वत्वं अन्यं समाश्रयति इति मे वितर्कः ।

**सत्यवती**— युक्तिरियं समीचीना । अपि जानासि कोऽयं मधुपर्कविधिः इति ।

**कान्तिमती**— मधुना दधि घृतं धानाः सक्तूंश्च संसृज्य पात्रे निधाय अतिथये अभ्यर्हिताय प्रदानम् इति आतिथ्यविदो वदन्ति ।

**सत्यवती**— अत्र विशेषतो वक्तव्या विषयाः सन्ति । परं तान् अन्यस्मिन् समये विमृशावः । प्रकृते तु पाणिग्रहणात्पूर्वं वरेण पितृनुद्दिश्य नान्दीश्राद्धं करणीयं इति जानासि किल ।

**कान्तिमती**-- न मया ज्ञातम् । ब्रूहि, किमर्थं इदं श्राद्धं

नाम अशुभं कर्म शुभे विवाहे कर्तव्यतया निश्चितं महर्षिभिः ।

**सत्यवती**— साधु पृच्छसि । मयापि एनमेव विषयमधिकृत्य अनुयुक्तो गुरुः 'भद्रे, पितॄणां ऋणनिर्मोक्षसाधनं इदमुद्वाहकर्मेति कृत्वा तेषामनुग्रहद्वारा सत्सन्तानसमृद्धिं कामयमानोऽयं वरः नान्दीश्राद्धेन प्रथमं पितॄणां सौमनस्यं संपादयति' इति मामवादीत् ।

**कान्तिमती**— आ युज्यते । 'सन्तानार्थाय विधये,' 'प्रजायै गृहमेधिनाम्,' 'नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः । न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः' इत्यादि वदता कविसार्वभौमेनापि उपदिष्टं इदं उद्वाहविधिरहस्यम् ।

**सत्यवती**— ततश्च वरः स्वयं वधूं दृष्ट्वा 'अभ्रातृघ्नीम्' इत्यादिमन्त्रं जपति ।

**कान्तिमती** – 'अभ्रातृघ्नीम्' इत्यनेन वरः अस्याः अधिगमेन सोदरस्नेहादीनां ह्रासो मा भूत् इति प्रार्थयत इव । पित्रार्जितस्य द्रविणस्य विभागार्थं परस्परं सोदराणां कलहे तत्तद्भार्या एव निदानम् इति सर्वविदितं किल ।

**सत्यवती**— मेधाविनीमत्रभवतीमुपलक्षये । "देशे देशे कल-

त्राणि देशे देशे च बान्धवाः । तं तु देशं न पश्यामि यत्र भ्राता सहोदरः' इति सौभ्रात्रस्य उत्कर्षं उपादिक्षत् राघवः । एवं सति किमर्थं इमे स्त्रीजिताः सोदरस्नेहमपि दूरीकुर्वन्ति ।

**कान्तिमती**— किमन्यत् । योषितां अनधिगतविद्यासंस्काराणां ईर्ष्याकषायितान्तरात्मनां स्वार्थपरत्वमेवात्र निदानम् ।

**सत्यवती**— एवंवादिनी भवती आत्मन उदारां प्रकृतिं आविष्करोषि ।

**कान्तिमती**— यथार्थकथने का प्रशंसा? उपरितनमपि विधानं वर्णय ।

**सत्यवती**— ततश्च वरो वधूमुपसृत्य 'अघोरचक्षुरपतिघ्नी' इत्यादिकां ऋचं अनुवाचयन्नेव तस्या दृष्टौ स्वदृष्टिं पातयति ।

**कान्तिमती**— मन्त्रेणानेन दम्पत्योः परस्परं तारामैत्रकं संपाद्यते इति ऋषीणां आशयेन भवितव्यम् ।

**सत्यवती**— ततः परं अनामिकाकनिष्ठिकाभ्यां अङ्गुष्ठं संगमय्य दर्भं संगृह्य 'त्वयि पतिघ्नीं अलक्ष्मीं नाशयामि' इत्यर्थकं मन्त्रं उद्गिरन् तेन तस्याः भ्रुवोरन्तरं संमृज्य प्रतीच्यां दिशि उत्सृजति ।

**कान्तिमती**— सम्यग्विचार्यमाणे समन्त्रकमिदं विधानं— स्तिमितावलोकनेन चेष्टाभिश्च अन्यस्य मनः स्वायत्तीकुर्वत आधुनिकान् तान्त्रिकान् (those who mesmerize) स्मारयति ।

**सत्यवती**— ततश्च यदि कन्या 'पितृकुलादन्यत्र गन्तव्यम्' इति चिन्तया रुद्यात्, तर्हि 'जीवां रुदन्तीम्' इति मन्त्रेण वरः तस्याः सौमनस्यं संपादयति ।

**कान्तिमती**— अचिन्त्यो हि मन्त्राणां प्रभावः ।

**सत्यवती**— अथ युग्मान् मन्त्रवतो ब्राह्मणान् अपामानयनाय प्रहिणोति ।

**कान्तिमती**— किमिति स्त्रियो जलाहरणाय न प्रेष्यन्ते?

**सत्यवती**— मन्त्रोच्चारणपूर्वकं खलु उदकमादातव्यम् ।

**कान्तिमती**— ततस्ततः ।

**सत्यवती**— अथ मण्डलाकारं दर्भसंचयं बध्वा शिरसि निधाय तदुपरि दक्षिणं युगच्छिद्रं निवेश्य, छिद्रे सुवर्णं निक्षिप्य, पावनं मन्त्रपञ्चकं उच्चार्य, तां स्नपयति । ततो नूतनेन वस्त्रेण तां परिधाप्य दर्भरज्जुं कट्यां बध्नाति ।

**कान्तिमती**— तन्वङ्ग्याः शिरसि किमर्थं युगस्य दक्षिणो भागो निक्षिप्यते?

**सत्यवती—** अद्याहं गृहमेधी भविष्यामि । धर्माचरणे गार्हस्थ्यधुराया अर्धो भागः त्वयापि वोढव्यः इति ज्ञापनार्थं इति तर्कयामि ।

**कान्तिमती—** अतिरमणीयं मन्त्रयसे । सुवर्णशकलनिक्षेपे किं तात्पर्यम् ?

**सत्यवती—** 'हिरण्यवर्णाः शुचयः पावकाः' इति मन्त्रलिङ्गेन उदकानां सुवर्णवर्णसंपादनं हिरण्यस्पर्शेन स्नानस्य पारिशुद्ध्यमपि द्योत्यते ।

**कान्तिमती—** अहो भवत्या मतिवैशद्यम् ।

**सत्यवती—** अथैतां दक्षिणे हस्ते गृहीत्वा अग्निमभ्येत्य उदगग्रं कटमास्तीर्य दक्षिणे पार्श्वे एनामुपवेश्य स्वयमपि तस्मिन्नुपविशति ।

**कान्तिमती—** किमर्थं दक्षिणे पार्श्वे एव वध्वा अवस्थानम् ?

**सत्यवती—** पुरुषाणां दक्षिणः पार्श्वः वनितानां च वामः श्लाघ्यतया परिकीर्त्यते । अतस्तयोरेवमवस्थानं परस्परं आदरातिशयद्योतनार्थम्— इति मन्ये ।

**कान्तिमती—** साधु, साधु ।

**सत्यवती—** अथ अग्निं उपसमाधाय 'सोमः प्रथमः' इत्या-

दिना मन्त्रद्वयेन तां अभिमन्त्रयति ।

**कान्तिमती—** किमर्थमिदं अभिमन्त्रणम् ?

**सत्यवती—** मन्त्रेऽस्मिन् सोमगन्धर्वाग्निभिः त्रिभिर्देवैः पर्यायेण गृहीता कन्या । 'तुरीयस्ते मनुष्यजाः' इति तस्याः मनुष्यः चतुर्थः पतिः इति ज्ञायते । अतस्तेषां गन्धर्वाणां सौमनस्यसंपादनार्थमिदं अभिमन्त्रणम् ।

**कान्तिमती—** अतः सर्वासामपि वनितानां चत्वारो वल्लभा भवन्ति इति अद्य ज्ञायते ।

**सत्यवती—** 'देवपतित्वम्' इत्यस्य ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च पोषणं तत्तदधिष्ठानदेवैः क्रियते । मनुष्येण तु सर्वस्यापि शरीरस्य पोषणम्— इत्यान्तरो भावः ।

**कान्तिमती—** ततस्ततः ।

**सत्यवती—** अथाधः प्रसृतेन दक्षिणेन हस्तेन उपरिस्थितं वध्वाः दक्षिणं हस्तं परिगृह्णाति वरः । यदि 'स्त्रीरेवास्यां जनयेयम्' इत्यभिलाषः, तर्हि तस्या अङ्गुलीरेव गृह्णीयात् । यदि च 'पुंस एवास्यामुत्पादयेयम्' इतीच्छा, तर्हि उत्तानं तस्या अङ्गुष्ठं अङ्गुष्ठेन गृह्णीयात् । पाणिग्रहणकाले वरेण 'गुणवतीः प्रजास्त्वयि जनयेयम्' इत्यर्थका मन्त्रा जप्याः ।

**कान्तिमती**— युज्यते । 'अङ्गुष्ठः पुरुषस्थानीयः । अङ्गुल्यश्च स्त्रीस्थानीयाः' इतीयं मानसी वृत्तिः अत्यन्तं हृद्या सहृदयानाम् । अङ्गुलीष्वेकस्याः द्वयोर्वा अभावे कार्यहानिर्नोपलभ्यते । अङ्गुष्ठनिकृन्तने तु अङ्गुलीनां शरीरस्य च महद्दौर्बल्यमुपलभ्यते किल ।

**कान्तिमती**— साधु पश्यसि । अनन्तरं वधूमेनां दक्षिणेन पदा प्राच्यामुदीच्यां वा दिशि 'एकमिषे विष्णुस्त्वान्वेतु' इत्यादिमन्त्रसप्तकं उद्गिरन् सप्त पदानि प्रक्रमयति ।

**कान्तिमती**— किमर्थमयं सप्तकृत्वः पदविन्यासः ?

**सत्यवती**— सख्यं साप्तपदीनमाहुः किल सहृदयाः । वरश्च सप्तमे पदे 'सखा सप्तपदा भव' इत्यादिमन्त्रं जपति ।

**कान्तिमती**— सखि, सप्तपदाभिक्रमणं कीदृश आन्तरोऽभिप्रायः इति न मे विशदमवभासते ।

**सत्यवती**— (किञ्चिद्विचिन्त्य) भूर्भुवःसुवरित्यादिसप्तलोकेष्वपि आवाभ्यां सहैवाविनाभूताभ्यां गन्तव्यमिति समयबन्ध इव प्रतिभाति ।

**कान्तिमती**— दुरूहो मन्त्रकृतामभिप्रायः ।

**सत्यवती**— अथैतौ दम्पती जातवेदसं प्रदक्षिणीकृत्य यथानिर्दिष्टं कटे उपविशतः । ततश्च वरः वध्वा क्षणमप्य-

वियुक्तः सन् 'सोमाय जनिविदे स्वाहा' इत्यादिभिः षोडशभिः मन्त्रैः जुहोति ।

**कान्तिमती**— सम्प्रत्यनन्तरमेवाजस्रं होमादिक्रियासु अन्वारब्धा वधूः आत्मनः सहधर्मचरीत्वं अन्वर्थयतीव ।

**सत्यवती**— अनन्तरमेनां अग्नेरुत्तरतः दक्षिणेन पदा निष्क्रमय्य 'आतिष्ठ इमं अश्मानम्, अश्मेव त्वं स्थिरा भव' इति मन्त्रमुच्चरन् अश्मानम् आस्थापयति ।

**कान्तिमती**— विधानेनानेन प्रेयसीं आत्मनो गृहदेवतापदे अग्नेः समक्ष अभिषिञ्चतीव वरः ।

**सत्यवती**— अथास्याः अञ्जलौ द्विर्लाजान निक्षिप्य, आज्येनाभिघार्य, 'जुहोतीयं नारी' इति मन्त्रेण मे सहधर्मचारिण्या अयं होमः क्रियते इति अग्निं प्रतिबोध्य लाजहोमं कारयति ।

**कान्तिमती**— (स्मरणमभिनीय) वध्वाः सोदरः किल लाजान् आवपति ।

**सत्यवती**— तदपि केषां चिन्महर्षीणां मतम् । एवं पुनः परिक्रमणं अश्मन्यवस्थापनम् लाजहोमः— इति विधानमिदं त्रिः क्रियते ।

**कान्तिमती**-- किमनेन सूच्यते ?

**सत्यवती**-- अश्मन्यवस्थापनेन 'अश्मेव त्वं मयि स्थिरा भव; त्वदभिसरणोद्यतान् अन्यान् शत्रून् परिभूय दूरतस्त्यज' इति वरेण उपदिश्यते। लाजहोमेन 'पत्युः दीर्घमायुर्भवतु' इति वध्वा प्रार्थ्यते। अग्नेः प्रदक्षिणीकरणेन 'तेजोबलमेधादीनामभिवृद्धिः सत्सन्तानसंपदादयश्च' अग्नेः सकाशात् उभाभ्यामप्यभिलष्यन्ते ।

**कान्तिमती**-- साधु, साधु । दिग्विजयमुद्दिश्य प्रस्थितवतो रघोः आयुष्यकामनया अवाकिरन्वयोवृद्धास्तं लाजैः पौरयोषितः इति वर्णयति किल कालिदासः ।

**सत्यवती**-- ततो जयादिहोमं कृत्वा वध्वाः मध्यदेशे निबद्धां रज्जुं विमुच्य तां हस्तिनमश्वं वा प्रवाहयेत्; शिबिकां रथं वा समारोहयेत् ।

**कान्तिमती**-- कोऽयं जयादिः ?

**सत्यवती**-- अयमुपसंहारहोमः ।

**कान्तिमती**-- अनेन पाणिग्रहणविधिः प्रायः परिसमाप्तः इति मन्ये ।

**सत्यवती**-- ततो विवाहाग्निं गृहीत्वा वधूसमेतः स्वगेहं गत्वा

प्रवेशहोमं कृत्वा उद्वाहविधिं परिसमापयति वरः ।

**कान्तिमती**— स एवायमग्निर्यावज्जीवं गृहे धार्यते इति वदन्ति किल वर्षीयांसः ।

**सत्यवती**— सत्यम् । यद्ययमग्नि मध्येमार्गं निर्वाणो भवति, तर्हि अस्य भस्मना संस्पृश्य अरणिर्मन्थितव्यः । अथवा अधीतवेदस्य श्रोत्रियस्य गृहादग्निराहार्यः । भार्यायाः पत्युर्वा उपवासः प्रायश्चित्तत्वेन विहित ।

**कान्तिमती**— नित्य धार्योऽयमग्नि इति निर्बन्धे किं कारणम्?

**सत्यवती**— विवाहसमये साक्षित्वेन अवस्थित एव अग्नौ अनुभवनं होमः दम्पत्योरभ्युदयहेतुः इति तर्कयामि ।

**कान्तिमती**— पुरा किल स्मृतिपथातीते काले अत्यन्तं शीतबाधाक्रान्ते गिरिप्रान्तदेशे अवात्सुः अस्मत्पूर्वपुरुषाः । तदानीं शैत्यनिवारणायाजस्रं अगारे अग्निर्धार्य आसीत् । अत एवायं नियमः तदानीन्तनैः महर्षिभिरनुशिष्टः । परं तु क्रमेण वितस्ताशिक्रीशुतुद्र्यादिनदीः तीर्त्वा आर्यावर्तमप्यतीत्य ऊष्मलानिमान् दक्षिणभूमिभागान् अधिगतवतामार्याणां धार्याग्निः सांप्रतमनावश्यकः इति केचनाधु-

निकाः चरित्रविमर्शका वदन्ति ।

**सत्यवती—** कान्तिमति, 'परलोकोऽस्ति वा उत न?' इति विचारयतां पार्थिवभोगैकप्रवणमानसानां चार्वाकप्रायाणां आधुनिकानां युक्तिवादः क्वचित्क्वचित्समीचीनोऽपि न मे हृदयं प्रविशति । संप्रति काममनुवर्तते धर्मः इति त्वयैवोक्तं खलु ।

**कान्तिमती—** परतोऽपि वर्णय ।

**सत्यवती—** अथ रथं सज्जीकृत्य मन्त्रपूर्वकं अश्वावनड्वाहौ वा बद्ध्वा वरः रथमारोहयति वधूम् । 'पतिकुले भिन्नभिन्नाभिरुचिमतां श्वश्रूश्वशुरननान्द्रादिजनानां मध्ये कुलान्तरोत्पन्नया मुग्धया मया कथमिव सुखेनावस्थातुं शक्यते?' इति कदाचिदियं वधूस्तदीया जनाश्च विमनीभवेयुः इति कृत्वा वरः 'पत्युः मूर्धानमारोह; प्रजया च विराट् भव; श्वश्रूश्वशुरननान्द्रादीनां मदीयानां जनानां पशुपुत्रादिसंपदां मद्गृहस्य च त्वमेव ईश्वरी भव' इत्यादिभिः प्रणयमधुरैर्वचोभिः सौमनस्यमुत्पादयति इत्यहो! लोकज्ञता मन्त्रकृतामृषीणाम् ।

**कान्तिमती—** हन्त! काचग्रहणोन्मुखाः पुरोहिताः विवेकि-

भिः अत्यन्तमभिनन्दनीयान् इमान्विषयान् प्रायेण न जानन्ति इति दूयते मे हृदयम् ।

**सत्यवती**— कालेऽस्मिन् अध्ययनपराः अर्थज्ञानपराङ्मुखाः केवलमक्षरराशिग्रहणेनैव आत्मनः कृतार्थतां मन्यन्ते ।

**कान्तिमती**— साहित्यविदः शास्त्रज्ञाश्च वेदाध्ययनपराङ्मुखाः निगमपुरुषस्य स्वरूपमप्यजानन्तः दूरतःस्खलितमात्मनो ब्राह्मण्यं नावगच्छन्ति— इत्यहो! कालस्य वैपरीत्यम् ।

**सत्यवती**— पुरा किल साङ्गानां वेदानां सामान्यशास्त्राणां चाध्ययनमावश्यकमासीत् सर्वेषामपि पण्डितानाम् । अद्य तु सर्वस्यापि प्राचीनाध्ययनक्रमस्य उत्सर्गो दृश्यते । किमस्माकं अनया कथया? प्रकृतमनुसरामः ।

**कान्तिमती**— सखि, सम्यगुक्तम् । 'यया कयाच विधया बह्वन्नं प्राप्नुयात्' इति श्रुतिरेकैवाद्य सर्वेषामप्यनुभवसिद्धा वरीवर्ति । रथमारूढयोः वधूवरयोर्यात्रां अनुवर्णय ।

**सत्यवती**— प्रस्थानात्पूर्वं रथस्य वर्त्मनोरुभयोरपि नीललोहिते सूत्रे व्यवस्तृणाति वरः ।

**कान्तिमती**— किमर्थमिदम्?

**सत्यवती**— परैः प्रहितायाः कृत्याया उपद्रवनिवारणार्थम् ।

**कान्तिमती**— सखि, कृत्या नाम कीदृशी ?

**सत्यवती**— शत्रूणामाभिचारप्रयोगेण प्रेरिता विपदामधिदेवता दंपत्योरभ्युदयं रुणाद्धि इति प्राचां मतम् ।

**कान्तिमती**— तदिदं नवीनवैज्ञानिकानां हृदये न प्रविशति ।

**सत्यवती**— किं तेन ? अनुभवसिद्धोऽयं विषयः प्रायः सर्वेषामप्यस्मद्देशीयानाम् ।

**कान्तिमती**— सत्यम् । पठ्यते किल निकुम्भिलावृत्तान्तो रामायणे । सखि, शेषमपि कथय ।

**सत्यवती**— व्यवस्तीर्णयोः सूत्रयोरुपरि रथेनाभिगच्छति वरः सह वध्वा । मध्येमार्गं च तीर्थस्थाणुचतुष्पथव्यतिक्रमे तत्तदधिष्ठानदेवतायाः प्रसादाधिगमाय मन्त्रान् जपति ।

**कान्तिमती**— युक्तरूपमेवेदमास्तिकानाम् ।

**सत्यवती**— यदि च पथि नदी नावा तरितव्या तर्हि वरो नावमभिमन्त्र्य सहाग्निना वध्वा च नावमारोहति । न च तरन्ती वधूः नाव्यान् पश्येत् ।

**कान्तिमती**— किंनिमित्तोऽयं निषेधः ।

**सत्यवती**— साहसिकानां नाविकानां सुसमृद्धे नदीप्रवाहे

व्यापारं दृष्ट्वा मुग्धेयं बिभियात् इति सूत्रकाराणामाशयेन भवितव्यम् ।

**कान्तिमती**— अहमप्येवमेव मन्ये ।

**सत्यवती**— श्मशानभूमेरुपरि रथस्य गमने अग्निभाण्डे रथे वा भग्ने अग्नेः मुखान्तमारभ्य प्रायश्चित्ताहुतीः हुत्वा जयादिपर्यन्तं कृत्वा पुनर्यात्रामारभते । प्लक्षन्यग्रोधादीनां महावनस्पतीनां महारण्यानां च व्यतिक्रमे मन्त्रान् जपति ।

**कान्तिमती**— ततस्ततः ।

**सत्यवती**— ततो गृहान् संप्राप्य वध्वै 'इदं मे सदनम्, इमे च मदीया जनाः' इत्यादि वदन् दर्शयति ।

**कान्तिमती**— अन्यथा कथमियं पतिकुलमिदमिति जानीयात् ?

**सत्यवती**— अनन्तरं कृतज्ञतानुसंधानद्योतकैः मन्त्रैः वाहौ विमुञ्चति वरः । ततश्च मध्येऽगारे प्राचीनग्रीवमुत्तरलोम लोहितं चानडुहं चर्म आस्तीर्य सह वध्वा गृहं प्रविशति । यथा च प्रविशन्ती वधूर्देहलीं नाधितिष्ठेत् , तथा जागरूकेण वरेण भवितव्यम् ।

**कान्तिमती**— किमर्थमयं निर्बन्धः ? न हि देहल्यां राक्षसः चोरो वा वसति ।

**सत्यवती—** देशेऽस्मिन् देहल्यामेव आसन्नमृत्यूनां पुरुषाणां वनितानां च निवेशो भवति । तेन हि तत्रावस्थाने कदाचिन्मङ्गलेतरस्य स्मरणं भवेदित्याकलय्य तन्निवारणकामैर्महर्षिभिरयं नियमः कृतः इति तर्कयामि ।

**कान्तिमती—** साधुरयं ते तर्कः ।

**सत्यवती—** ततश्च उत्तरपूर्वे प्रदेशे अगारस्य अग्नेर्यथाविधि होमं कृत्वा चर्मणि उपविशति वरः सह वध्वा । अथ वध्वा अङ्के जीवत्पुत्रायाः पुत्रमुपवेश्य तस्मै मन्त्रपूर्वकं फलानि दत्त्वा नक्षत्रोदयपर्यन्तं तूष्णीं तिष्ठति । उदितेषु च नक्षत्रेषु प्राचीमुदीचीं वा दिशं वधूं नीत्वा ध्रुवमरुन्धतीं च दर्शयति ।

**कान्तिमती—** अनेन विधानेन 'आवामग्नेः प्रसादेन आत्मजपरिष्वङ्गामृतास्वादसुखं लब्ध्वा कृतकृत्यौ भूयास्व' इति वरः आशास्त इति मन्ये । उक्तं हि कुन्तीं प्रत्यनपत्यतादूयमानमानसेन पाण्डुना

'अहं किमम्बा किमभीष्टतापदे
तवेति मातुर्धुरि तातपृच्छया ।
प्रलोभतुल्यं प्रवदन्तमर्भकं
मुदा हसन्जिघ्रति मूर्ध्नि पुण्यभाक् ॥' इति ।

परं तु ध्रुवारुन्धतीदर्शनं किमर्थमिति न ज्ञायते ।

**सत्यवती**-- नक्षत्रदर्शनकाले जप्यमानानां मन्त्राणां अर्थे परामृश्यमाने— 'पुरा काश्यपादयः सप्तर्षयः आसन्; तेषां कृत्तिका नाम भार्याः सप्त; तासां अरुन्धती नाम सप्तमी पतिव्रताप्रधानभूतानिश्चला च; इतरा व्यभिचारशङ्कया त्यक्ताः इत्यैतिहासिकाः स्मरन्ति । अहं सप्तर्षीणां अष्टमस्थानीयो भूयासम्; इयमपि कृत्तिकासु अष्टमस्थानीया भूयात्' इति वरस्य आशंसा स्पष्टीभवति ॥

**कान्तिमती**— सखि, नक्षत्राणि हि गोलाकाराणि पुण्यकर्मभिः अनन्तरजन्मसु अधिगम्यमानानि लोकान्तराणि इति कथ्यन्ते । तत्कथमिव तेषां स्त्रीपुरुषभावना पातिव्रत्यादिगुणाश्रयो वा घटते ।

**सत्यवती**— तत्तदधिष्ठानदेवतास्वरूपमेव अत्रोदाहृतमिति मन्ये ।

**कान्तिमती**— बृहस्पतिग्रहासन्नं किञ्चित् ऋक्षं कदाचित् शशाङ्कमण्डले निपतितमासीत् । तयोश्च मेलनेन बुध इति ग्रहान्तरं नूतनमुत्पन्नमितीमं खगोलवृत्तान्तमेव ताराशशाङ्कोपाख्यानत्वेन वर्णयन्ति ऐतिहासिकाः । तदेतदुपेक्षितव्यमिति नवीनाः ज्योतिर्विदः ।

**सत्यवती**— षोडशस्त्रीसहस्राणाम् पतिः श्रीमान् वासुदेवः तत्तद्गृहे सममेव विहरन् दृष्टो नारदेन । एवमेव गोपीवृत्तान्तश्च । एषा कथा सम्यङ्निरूप्यमाणा सर्वसङ्गपरित्यागिनां परमात्मानमेव अनवरतं अनुध्यायतां जीवानां शुद्धसत्त्वमये लोके नित्यकैङ्कर्यानन्दप्राप्त्यादि श्रुतिशतनिरूपितं रहस्यमेव प्रकारान्तरेण अवगमयति विवेकिनः इति जानासि किल । तद्वदिहापि स्यात् ।

**कान्तिमती**— सखि, किमर्थमिदं अध्यात्मस्वरूपनिरूपणे प्रकारान्तराश्रयणम्? अतत्त्वविदो हि यथाश्रुतग्राहिणः 'गोपकन्याभुजङ्गोऽयम्, जारवृत्तिरेषः, गोपालोऽसौ, अतः न सर्वथा पूजनीयः' इत्यादि वदन्तः 'सर्वं कृष्णार्पणमस्तु' इत्यनवरतं अनुध्यायतां अस्माकं मतस्योपरि दूषणं उद्घोषयन्ति ।

**सत्यवती**— 'सर्वं कृष्णार्पणमस्तु' इत्यस्मिन् वाक्ये एव हृदयंगमं समाधानमुपलभ्यते । महानयं विषयः प्रसङ्गान्तरे विमर्शनीयः । संप्रति प्रकृतमनुसरावः ।

**कान्तिमती**— प्रवेशहोमे कृते पाणिग्रहणविधिः परिसमाप्तः इति किल चिन्तितं मया ।

**सत्यवती**— न हि न हि । स्थालीपाकवैश्वदेवादीनां गृहमे-

धिभिः सह बध्वा अनुष्ठेयानां कर्मणाम् उपदेशमन्तरा उद्वाहविधिः असंपूर्णः किल ।

**कान्तिमती**— सत्यम् । अन्यथा कथमियं सहधर्मचारिणीव्यपदेशमर्हति ।

**सत्यवती**— ततश्च गृहमेधिकर्मानुतिष्ठतोः दम्पत्योः पाणिग्रहणदिवसात्प्रभृति त्रिरात्रम् अधःशय्या ब्रह्मचर्यं क्षारलवणवर्जनम् इत्यादिनियमो विहितः । तयोरुभयोः शय्यामन्तरेण गन्धलिप्तो वाससा सूत्रेण वा परिवीतः नैयग्रोध औदुम्बर आश्वत्थः प्लाक्षो वा दण्डः स्थापयितव्यः । एते एव वृक्षाः गन्धर्वाप्सरसां गृहाः इत्याम्नायविदो वदन्ति ।

**कान्तिमती**— किमर्थमिदं दण्डे गन्धर्वस्य आवाहनम् ?

**सत्यवती**— विश्वावसुनामायं गन्धर्वः । तेनेयं परिगृहीता । तस्य च अनुज्ञां नतिभिः स्तुतिभिश्च संपाद्य वरो धर्मप्रजाधिगमाय वधूसंगमं प्रारिप्सते ।

**कान्तिमती**-- विवाहदिवसादारभ्य त्रिरात्रम् उभयोः ब्रह्मचर्यनियमः; चतुर्थ्यां तु रजन्यामपररात्रे दण्डोत्थापनेन गन्धर्वप्रसादनद्वारा ऋतुदोषशमनानन्तरं दम्पत्योः शुभे मुहूर्ते समावेशो भवति इति किल सूत्रकाराः ।

**सत्यवती—** अथ किम् ।

**कान्तिमती—** अनेन ऋतुमतीनामेव विवाहः शास्त्रीयः इति निःसंशयं ज्ञायते ।

**सत्यवती—** सखि, किञ्चिदिव अवधेहि । पुरा किल— श्राद्धादिषु मांसादीनां परिवेषः ; सर्ववर्णेषु ब्राह्मणानां दारक्रिया ; द्विजन्मनां महानसेषु शूद्रैः पाकक्रिया ; स्त्रीणां च रजोदर्शनात्परम् उद्वाहः ; वेदमधीत्य स्नातानामेव गार्हस्थ्येऽधिकारः-- इत्यादयः समयाचाराः शास्त्रीया इति प्राचीनानां स्मृतिकर्तॄणामाशयः इति ज्ञायते । तदा हि धर्ममन्ववर्तत कामः । पुरुषार्थेषु धर्मो मोक्षश्च प्रधानभूतौ आस्ताम् । तस्मिंश्च काले प्राचुर्येण सत्त्वगुणस्यैव उन्मेषः समजनि । परलोकभीतिः अभ्यधिका आसीत् । पार्थिवभोगप्रवणाश्च विरला आसन् । ब्राह्मणा हि तदानीं समलोष्टाश्मकाञ्चनाः यदृच्छालाभसंतुष्टा ब्रह्मनिष्ठाश्च बभूवुः । धनिकाः प्रभवश्च तेषां नैस्पृह्यवैराग्यादिगुणसंपत्तिमभिवीक्ष्य तत्कटाक्षलाभं साम्राज्यलाभादप्यधिकं मेनिरे ।

इदानीं तु काममनुवर्तते धर्मः । अर्थकामाविति द्वावेव पुरुषार्थौ प्रधानतया विलसतः । कालेऽस्मिन् प्रायो रजसः तमसश्चैवोन्मेष उपलभ्यते । परलोकः शशविषाणतुल्य इति

निश्चितः । पार्थिवभोगाधिगमेनैव जन्मनः साफल्यम् अनुपश्यन्ति विपश्चितोऽपि । ब्राह्मणा हि द्रविणाशापिशाचिकाग्रस्ताः ईषणात्रयवशीकृताः परित्यक्तस्वीयवृत्तयः कामक्रोधलोभादीनां दासभूताः पर्यटन्ति । धनिकानां प्रभूणां च प्रसादाधिगमकाङ्क्षिणः इमे विगतान्यकर्तव्याः तान् स्तुवन्ति उद्भावयन्ति च तन्माहात्म्यम् ।

एवं स्थिते मांसाशनाद्याचाराः रजस्तमःप्रचुरे कालेऽस्मिन् अनर्थावहा भवेयुः इति ज्ञात्वैव रजोदर्शनात्पूर्वमेव पाणिग्रहणविधानमवश्यकर्तव्यम् इति अभिज्ञाः त्रिकालवेदिनः केचन महर्षिकल्पा निरचैषुः । अत्र कं दोषं अनुपश्यति भवती ?

**कान्तिमती**— सत्यमाह महानुभावा मे सखी । कालः करोति कार्याणि । ब्रह्मचर्यनियमः, गुरुकुलवासः, वेदाध्ययनम्, उदयोपस्थानम्, त्रिंशद्वयोनन्तरं पुंसां दारकर्म, अग्न्युपासनम्, वैश्वदेवाचरणम्, स्थालीपाकः— इत्यादिकथैव अद्य प्रायेणास्तमिता। क वयं रजस्तमोभिभूताः ! क च श्रुतिस्मृतिविहिता धर्माः? तादृशधर्माणां सांप्रतं अतिदेशोद्यमः सर्वथा न विवेकिभिः आदरणीयः ।

**सत्यवती**— ततश्च अग्निरुपसमाधानादि कृत्वा दम्पत्योः पर-

स्परानुरागाभिवर्धनकाम्यया काश्चन आहुतीर्हुत्वा जयादि-करणेन होमं परिसमाप्य अपरेणाग्निं प्राचीं वधूमुपवेश्य हुतशेषादाज्यं किञ्चित्तस्याः शिरस्यानीय मन्त्रोच्चारण-पूर्वकं मिथः समीक्ष्य तेनैवाज्यशेषेण उभयोः हृदयदेशौ संमृज्य दम्पत्योः शरीरसंसर्गद्योतकान्मन्त्रान् समावेशने जपति वरः ।

**कान्तिमती**— मिथः समीक्षणम्, तत उभयोर्हृदयदेशस्पर्शः, अनन्तरं च समावेशः, इत्यनेन 'चक्षुःप्रीतिर्मनःसङ्गः' इत्यादिकमन्यत्रोदितं प्रकारमनुस्मारितास्मि ।

**सत्यवती**— ततः समावेशनकाले जप्यमानतया विहितो मन्त्रः स्त्रीपुंसयोः व्यवायकर्मप्रकारं विस्तरतोऽनुशिक्षयति ।

**कान्तिमती**— (सहासम्) अनधिगतार्थबोधकत्वं हि शास्त्रस्य लक्षणम् । आहारनिद्राभयव्यवायादयः तिरश्चामपि समाना एव । अतो मन्त्रे व्यवायानुवर्णनं किमर्थमिति न ज्ञायते ।

**सत्यवती**— मन्त्रोऽयं सुसूक्ष्मं अनुविमृश्यमानः समावेशोऽयं परार्थो यज्ञः न तु स्वार्थः; दम्पत्योः संसर्गो हि अरणि-मथनतुल्यः; उभयोः परस्परं सौमनस्येनैव गुणवतः पुत्र-स्योत्पत्तिः; पुत्रपौत्रद्वारा द्वयोरप्यमृतत्वमस्मिन् लोके; ओषध्युपचयवत् प्रजननमपि लोकस्याभ्युदयहेतुः; पितृ-

णाम् ऋणापनयनायेदमवश्यमनुष्ठेयम्' इत्यादिकमनधिगत- मर्थं सम्यगुपदिशति इति ज्ञायते । तथा च 'प्रजननं वै प्रतिष्ठा साधु प्रजायास्तन्तुं तन्वानः पितृणामनृणो भवति' इति तैत्तरीयाः समामनन्ति ।

**कान्तिमती**— साधु साधु । कविसार्वभौमोऽपि— 'दुष्य- न्तेनाहितं तेजो दधानां भूतये भुवः', 'अत्यादित्यं हुतवहमुखे संभृतं तद्धि तेजः' इत्यादिना निषेककर्मेदं श्रुतिप्रोक्ता पञ्चमाहुतिरिति बोधयन् 'अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः' इति च तमेवार्थं प्रकारान्तरेण विश- दयन् 'पुरा किल धर्ममन्ववर्तत कामः' इतीममाशयं द्रढयति किल ।

**सत्यवती**— कः सन्देहः? सर्वशास्त्रमर्मवेदिनः खलु महा- कवयः ।

**कान्तिमती**— समावेशाचरणेनावसीयते किलोद्वाहकर्म ।

**सत्यवती**— अथ किम् ।

**कान्तिमती**— सखि, सम्यगवगतो विवाहविधिप्रकारः । परं तु अत्र पाणिग्रहणानुवर्णनकाले मङ्गलसूत्रकथा विस्मृतेति मन्ये ।

**सत्यवती**— न हि । न हि । गृह्यसूत्रे मङ्गलसूत्रकथैव नास्ति ।

बध्वाः कण्ठे मङ्गलसूत्रबन्धनद्योतको मन्त्रः न कुत्राप्युपलभ्यते ।

**कान्तिमती**— पुरोहितो मन्त्रोच्चारणपूर्वकमेव कण्ठे मङ्गलसूत्रं बध्नाति ।

**सत्यवती**— तेनोच्चार्यमाणा वर्णावलिः न मन्त्ररूपा । 'मङ्गल्यतन्तुनाऽनेन मम जीवनहेतुना । कण्ठे बध्नामि सुभगे त्वं जीव शरदः शतम् ।' इत्ययं कश्चन श्लोकः शिष्टैरनुमतः । मङ्गलतन्तुबन्धनं तूत्तरदेशे बहुषु जनपदेषु नाचर्यते । इदमेवाभिप्रेत्य 'अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च । तान् विवाहे प्रतीयात्; यत्तु समानं तद्वक्ष्यामः' इत्याश्वलायनो महर्षिरनुशास्ति ।

**कान्तिमती**— (सगौरवम्) सखि, ब्रह्मवादिनीपदमर्हत्यत्रभवती । असाधारणी ज्ञानसंपत्तिः । अन्यादृशं मन्त्रार्थविज्ञानम् । निरुपमः प्राचीनार्यधर्मविचारप्रकारः । अत्यद्भुता लोकज्ञता । अभिनन्दनीया कथोपक्षेपचातुरी । आस्वादनीया मधुरमधुरा भवत्या वाग्धोरणी । भवत्या दर्शनमप्यतिपावनमाकलयामि; किमुत भाषणम् । एवमेव गृह्योक्तानां विध्यन्तराणामपि तत्त्वार्थं भवत्याः सकाशादवगन्तुमुत्सहे । तत्प्रसीदतु भवती ।

**सत्यवती**—— भवत्याः सत्त्वोन्मेषः एवं व्याहारयति । न तु मदीयो गुणः । महानद्य कालातिपातः समजनि । अन्यत्सर्वं प्रसङ्गान्तरे भवतु ॥

[ इति निष्क्रान्ते ।

७२

ओनमः परमात्मने

# नूतन गीता वैचित्र्य विलासः

❀

श्री

## भगवद्गीतादासेन

विरचितः

❀

PRINTED AT THE COMMERCIAL PRESS,
MADRAS. S E

---

*1917.*

# ERRATA.

| उपोद्घाते | | | |
|---|---|---|---|
| पा. | प. | अशुद्धम् | शुद्धम्. |
| 1 | - 10. | तोत्र | तोऽत्र. |
| ,, | - 14. | योयं | योऽयं. |
| 2 | - 7. | करण | कारण. |
| ,, | - 13. | मिबा | मिवा. |
| ,, | - 15. | यतोय | यतोऽय. |
| 3 | - 12. | द्दरक्ष | द्दक्ष. |
| ,, | - 16. | यान्ना | याच्ञा. |
| ,, | - 16. | नैता | एता. |
| ,, | - 17. | लभा | पलभा. |
| ,, | | अतोत्र | अतोऽत्र. |
| ग्रन्थे | | | |
| 2 | - 16. | स्वलु | खलु. |
| ,, | - 21. | भो. | भोः |
| 3 | - 11. | महिन्मा | महिम्ना. |
| 5 | - 21. | इतोप्य | इतोऽप्य. |
| 7 | - 4. | धम | धर्म. |
| ,, | - 16. | ाकमयं | किमयं. |
| 8 | - 17. | प्रमाणं | प्रमाणं. |
| ,, | - 20. | गोमि | गोभि. |
| 11 | - 1. | मिय | मिद. |

| पा. | प. | अशुद्धम् | शुद्धम्. |
|---|---|---|---|
| 11 | - 3. | ख्याया | ख्यया |
| ,, | - 18. | शथामहे | शेमहे. |
| ,, | - 21. | मूलका | मूलिका. |
| ,, | | तांगगा | तागद्गा. |
| 12 | - 3. | भोव | भोवाव. |
| ,, | - 13. | उपोत्वा | उपोद्घा· |
| ,, | - 17. | षट्कतु | षट्क चतु. |
| ,, | - 22. | हरसि | हरति. |
| 13 | - 8. | ध्याया | ध्यायाः |
| ,, | - 9. | यैं: | यैः |
| 18 | - 5. | लभ्यन्ते | लभ्यते. |
| ,, | - 7. | तोर्नि | तोनि. |
| 20 | - 3. | ४६ | ८६. |
| ,, | - 4. | न्योप्य | न्योऽप्य. |
| 22 | · 10. | तर्ती | तार्ती. |
| 23 | - 11. | संकृत | संस्कृत. |
| ,, | - 12. | संकृत | संस्कृत. |
| ,, | - 23. | ध्यते | च्छयते. |
| 26 | - 2. | भो | भोः. |
| ,, | - 8. | पाश्चाली | पाञ्चाली. |
| 27 | - 1. | कले | कलेः. |

ओं

श्रीरस्तु.

आर्याः महाशयाः

मामिकामनुचितामुचितां वा सविनयां विज्ञप्तिं सादरं किंचि-
दवधत्त.

अथ खलु सर्वेषां भारतवर्षीयाणां अयमाशयो निर्विशेषमुत्पन्नो दृश्यते.
यत्सर्वेषामैकमत्येन वर्तनं सर्वसुखानां देशजात्युत्कर्षादीनां निदानं. अत-
स्तदिदानीं यथाकथंचित् संपादनीयमिति ॥ अत्र च ऐकमत्यं नाम पर-
स्परसौहार्दादनर्थान्तरं. बहवश्चात्र प्रयतन्ते फलं तु विसंवदत्यमीषां
प्रयतमानानां. यतोऽत्र साधनेषु विप्रतिपद्यमानाः सर्वेवाऽवान्तरकलहा-
ख्यं परस्परप्रद्वेषस्यैव निमित्तान्तरमप्युत्पादयन्ति ॥ साधनविप्रतिपत्त-
यश्च बहुप्रकाराः. ताश्चात्र किंचिदुदाह्रियन्ते ॥

तथाहि. अत्र केचित् आर्यजनानां अस्माकं वेदशास्त्रादि प्रमाण-
ग्रन्थैरविप्रतिपद्यमानः योऽयं वर्णाश्रमविभागः तस्यैवात्र परमप्रतिबन्ध-
भूतत्वात्. तत्त्यागमेव श्रेयस्साधनं मन्यन्ते ॥

अन्येपुनः शास्त्रावगतवर्णादिविभागत्यागमसहमानाः. विनैवशास्त्र-
रूपं प्रमाणं केवलशिष्टसमयप्रमाणकं वर्णेष्वेवाऽवान्तरकलहनियामकं
अवान्तरविभागमात्रंत्यक्तुमिच्छन्ति ॥

अपरे तु सनातनशिष्टसमयस्यापि प्रमाणत्वाविशेषात् शिष्टसमय-
त्यागवार्तामप्यसहमानास्साधवः प्रकारान्तरं मन्यन्ते ॥

देशान्तरेषु अवान्तरजातिविभागमन्तरावर्त्तमानानामपि परस्परकलहोपलंभात् अकिंचित्करोऽयं प्रमाणासिद्धाविभागत्यागः अत्रहि विभागत्यागे सर्वेषां सर्वैस्सहविवाहार्हतासिद्धयति. विवाहस्तुकेषांचित् कैश्चिदेव भवति, नैतावतासौहार्दमुत्पद्येत शाम्येद्वाप्रद्वेषः पापं परंसिद्धयेत्. धर्मत्यागात् तस्मान्नात्रफलवान् समुद्यम इति.

परेत्वेवमभिप्रयन्ति. भारतीयेषु मतभेद एवमुख्यं कलह प्रद्वेषादिकरणमिति,

स्यादेतत्. यत इदं विस्पष्टमुपलभ्यते स्मार्त्तवैष्णवादिजाति विभागः कुताश्चिदेवकालादारभ्य प्रमाणमनपेक्ष्यैव प्रवृत्त इति. नात्रतत्तद्ग्राह्यग्रन्थाः प्रमाणीभवितुमर्हन्ति. तत्रैवं विभागोपदेशानुपलम्भात्. प्रत्युत सर्वेषां सर्वत्र सौहार्दकारणं आत्मैक्यं, अन्तर्याम्यैक्यं, समदर्शनं, भूतदया, इत्यादिकमेवहि प्राधान्येन प्रतिपाद्यते. मतानुवार्त्तिष्वेतादृशंफलं तु विरळमेवोपलभ्यते. जातिभेदप्रद्वेषौ तु दाढर्यमिवाप द्येते. अनिवार्य एवायं अनर्थोविवेकाविधुराणां ॥

विवेकिनां तु अकिञ्चित्करमेवेदं यन्मतप्रद्वेषोनाम. यतोयमलब्धावकाशो विवेकिषु. सतिचैवं इदानीमपि कुतो वा नवनवान् वैमत्यहेतूनुत्पादयन्त्याधुनिका इतिकारणमत्रनविज्ञायते. अथवा विज्ञायत एवात्रकारणं. न किञ्चिदुदरभरणादन्यदिति. महदिदंखलुपापं यदानित्यस्यार्थस्यकृतेसच्छास्त्राणामन्यथाकरणेन स्वमनीषयाशास्त्रान्तरकल्पनं, तेनच, स्वस्यातीन्द्रियार्थदर्शनादिशक्तिप्रकटनं, तेनच, साधुजनप्रतारणं, तेनच. स्वेप्सितार्थ प्रसाधनमिति, यद्यपि नाऽधुनाऽनेन शास्त्ररचनेन भूयान्

दोष: प्रसज्येत अथापि कालान्तरेऽपि दोषो न सम्पत्स्यत इति कोनाम विश्वासः. अनुभूयत एवहि लोके कस्यचित्सम्प्रतिपन्नस्य प्रभोः पण्डितस्यवाक्वचित् संरम्भातिशये तद्बान्धवानां तत्सुहृदां तद्वंश्यानां च ततोऽपि भूयान् संरंभः तत्रैव. प्रथमं चात्रनिदर्शनं पञ्चांगभेद एव. अयमेव पञ्चांगभेदः कदाचित् जातिभेदमपि न प्रयोजयेदिति नास्माकमस्ति निश्चयकारणम् ॥

अत्र खलु न जाग्रत्यार्यां सनातनं पन्थानमनुसन्धाना अपि ॥ स्थितेचैवं अधुनाकश्चिदुपलभ्यते गीतानामकोग्रन्थः तं च सरक्षोद्धारं पठन्तोऽपि नोपलभामहेपूर्वाचार्योपादिष्टानर्थविशेषान् प्रतिज्ञायते च तत्रोपोद्घाते.सर्वसमय विलक्षणस्सनातनधर्मोऽत्र प्रतिपाद्यत इति. इयमेव च गीताभगवतावासुदेवेन पार्थाय प्रतिपादिताऽभूत इति च. एवमुच्छृङ्खलं लोकप्रतारणे प्रवर्त्तमानानामिदमत्रधैर्यकारणं. यदस्मद्वरक्षणाधिकृतश्चक्रवर्त्ती स्वधर्मपालनाधिकारमस्मास्वर्पयन्नुदास्त इति. इदानीं परमकारुणिकं चक्रवर्त्तिनमुपेत्यबहुतरमितोऽपि स्वातन्त्र्यं याचमानाना मेतादृशमल्पतरमप्यनिष्टमनिवार्यचेत किमितोऽपि बहुनर्थहेतु स्वातन्त्र्य याच्नाकार्पण्येन नैतादृशाल्पतरधर्मपीडाव्यतिरेकेण न किंचिदपि कृच्छ्मुलभामहे शासनेऽस्यऽमहितस्य चक्रवर्त्तिश्रेष्ठस्य. अतोवनूत्नविरचिताया मुन्मत्तगीतायामुपलभ्यमानान् विरुद्धार्थान्प्रलापान् किंचिदिव विभाव्यसाधुषु निवेदने नोदासीरन् सज्जना इति सविस्रम्भमिमामारभे कृतिमुन्मत्तगीतावैचित्र्यविलासाख्यां ॥

---

ओं

नमः परमात्मने.

॥ प्रणम्यपरमात्मानं पार्थसारथिमव्ययम ॥

॥ उन्मत्तगीतावैचित्र्यविलासोऽयं विरच्यते ॥

प्रणतोऽस्मिभोबालचन्द्रदीक्षित.

वालचन्द्र दीक्षितः.अयिभोः.शास्त्रिन् कुमुदाकर, कदाकुतः प्राप्तोऽसि ॥

कुमुदाकरः. अद्यैव प्रातरागतोऽस्मिचेन्ननगरात् ।

बा. किं तेतत्र ।

कु. प्रतिवसतिर्हिमेभागिनेयस्तत्रमहासभायां किंचिन्नियोगमुपजीवन् ।

बा. अथकिं प्रयोजनमिहागमने ।

कु. प्रथमं तावत् चित्सभानटस्य दर्शनं, द्वितीयं तु, भवतोदर्शनं बहोः कालात्प्राग्दृष्टस्यसुहृत्तमस्य ।

बा. हन्त तुष्यामि नितरां नविस्मरसिसब्रह्मचारिणं मामिति ॥ अथदृष्टो भगवान् चित्सभानटः, क्वभुक्तं, क्ववा विश्रान्तं,

कुं. दृष्टः प्रातरेव परमेश्वरः दीनानुकंपीचित्सभानाथः, भुक्तंच अस्म द्बन्धुगृहे, विश्रान्तं च तत्रैव, अधुनाऽद्राक्षं भवन्तं.

बा. तर्ह्यत्र बाह्यवेदिकायामेव उपविशावः

कु. तथा कुर्वः

बा. अपि कुशलं ते सबान्धवस्य.

कु. कुशलिनोवयं. भवदाशिषा. अथ कुशलिनो भवन्तः.

बा. आं. कुशलमेव न शिवकृपया. अथकिमिदं हस्ते नूत्नमिवमुद्रितं पुस्तकं.

कु. सत्यं नूत्नतममिदं. भवदर्थमानीतं.

बा. अयि. किमिदं नूत्नतममिति. केनाचिद्विराचितं.

कु. बाढं. इदंगीताशास्त्रं नूतनमेव.

बा. केयंगीता.

कु. भगवत्प्रोक्तैवगीता.

बा. किमियमर्जुनायोपदिष्टा व्यासप्रथिता भारतमध्यवर्त्तिनी.

कु. सत्यं. सैव.

बा. तर्हीयं कथं नूत्नेत्युच्यते. पुरातनी खलु सा.

कु. अस्तीहविशेषः सा खलु अशुद्धा या भवतोच्यते.

बा. हन्तभोः अथगीताप्यशुद्धिमापादिता. स्यादयं कलेर्विलासः. श्रणुमस्तावदत्रत्त्यान् विशेषान्. ब्रूहितावदस्याः गीतायाः भगवद्गीतायाश्चभेदान्.

कु. प्रथमं तावदयं. इदानींलोके प्रचरन्ती खलु गीता अष्टादशाध्यायात्मिका सप्तशतश्लोकात्मिकाच.

बा. सत्यमेवं. नूत्नात्वियंकीदृशी.

कु. इयं हि षड्विंशत्त्यध्यायात्मिका पञ्चचत्वारिंशदधिकसप्तशतश्लोकात्मिका च.

बाः हन्तभो. किमेतादृश्येका गीता प्रादुरभूत्.

कु. ननु इयमेव खलु गीतेत्युच्यते.

बा. किमत्र प्रमाणं इयमेवगीतेति.

कु. उच्यत एव तत्र प्रमाणं इदं तावन्निरूपयतु भवान किमत्र प्रमाणं यदष्टादशाध्यायिन्येवगीता सप्तशतश्लोकात्मिकाचेति.

बा. अपिनिरूपणीयमत्र प्रमाणं. विप्रतिपत्तौ हि प्रमाणापेक्षा. इदं हि संप्रतिपन्नमेवसर्वैः. यदष्टादशाध्यायिन्येव गीतेति. यतः सगुण निर्गुणभेदेन शिवाविष्ण्वाद्यनेकमूर्तिभेदेन च विवदमानेष्वपि नात्र गीताशास्त्रे शृणुमो विप्रतिपत्तिं. अपि तु स्वस्वानुकूलार्थ प्रतिपादकतानिर्वहणेन परमं खल्वादरं प्रदर्शयन्त्यस्मिन् आस्तिकप्रवराः, संप्रतिपत्तिं च.

कु. सत्यमेवेदं. अथाप्यागतेवेदानीं विप्रतिपत्तिः किंचिदिव काल महिम्ना. ततोऽत्रनिरूपयतु भवान् यद्यस्ति प्रमाणं.

बा. शृणुतावत्. प्रथमं तावदिदमेव प्रमाणं. यद्वारनकोशेषु उक्तलक्षणैव गीता निर्विवादमुपलभ्यते, किं च श्रीमद्बादरायणमुनिप्रणीतं पाद्मपुराणं च अत्रप्रमाणं. तत्रहि.

"शृणुसुश्रोणि वक्ष्यामि गीतासुस्थितिमात्मनः.
वक्त्राणिपञ्चजानीहि पञ्चाध्यायाननुक्रमात्.
दशाध्यायान् भुजांश्चैकमुदरं द्वौपदाम्बुजे.
एवमष्टादशाध्यायी वाङ्मयीमूर्तिरैश्वरी.
जानीहि ज्ञानमात्रेण महापातकनाशिनी.
अत्राध्यायं तदर्धं वाश्लोकमर्द्धार्द्धमेव च.
अभ्यस्यति सुमेधायः सुशर्मेव समुच्यते."

६. उ. खण्डे 171 अ. श्लो. 27. 28. 29. 29½.

इत्यन्तैः सार्द्धैः त्रिभिः श्लोकैः अष्टादशाध्यायिन्येव गीता ध्येय मूर्त्तिकल्पनयास्तूयते. तत्रैव च, गीतागतानां अष्टादशानामध्यायानां प्रत्येकं पारायणफलादिकं च निरूप्यते तावाद्भिरेवाध्यायैः अन्यच. वाराहपुराणेऽपि धराविष्णुसंवादे.

"योऽष्टादशजपीनित्यं नरोनिश्चलमानसः.
ज्ञानसिद्धिंसलभते ततो यातिपरं पदं ॥
पाठेऽसमर्थः संपूर्णे ततोऽर्धं पाठमाचरेत्.
तदागोदानजं पुण्यं लभते नात्रसंशयः ॥
त्रिभागं पठमानस्तु गंगास्नानफलं लभेत्.
षडंशंजपमानस्तु सोमयागफलं लभेत् ॥
एकाध्यायं तु योनित्यं पठते भक्तिसंयुतः
रुद्रलोकमवाप्नोति गणोभूत्वा वसेच्चिरं ॥
अध्यायं श्लोकपादंवा नित्यं यः पठतेनरः.
सयातिनरतां यावन्मन्वन्तरं वसुन्धरे ॥
गीतायाः श्लोकदशकं सप्तपञ्चचतुष्टयं.
द्वौत्रीनेकं तदर्धं वा श्लोकानां यः पठेन्नरः॥
चन्द्रलोकमवाप्नोति वर्षाणामयुतंध्रुवं.
गीतापाठसमायुक्तः मृतोमानुषतां व्रजेत् ॥
गीताभ्यासं पुनः कृत्वालभते मुक्तिमुत्तमां.
गीतेत्युच्चारसंयुक्तोम्रियमाणोगतिं लभेत् ॥
गीतार्थश्रवणासक्तो महापापयुतोपिवा.
वैकुण्ठं समवाप्नोति विष्णुनासहमोदते ॥

इत्यादीनि भगवद्वचनानि विस्पष्टं प्रतिपादयन्ति अष्टादशाध्याय-वत्तां गीतायाः.

अपि च. सोपदेशं गीतां पठद्भिः सर्वैरास्तिकजनैः बहोः कालादा-द्रियमाणः.

"पार्थाय प्रतिबोधितां भगवतानारायणेनस्वयं
व्यासेन ग्रथितां पुराणमुनिनामध्ये महाभारतं.
अद्वैतामृतवर्षिणीं भगवतीमष्टादशाध्यायिनी
"मम्ब त्वामनुसंदधामि भगवद्गीते भवद्वेषिणी"
इत्ययं ध्यानश्लोकोऽपि कुतोवा न प्रमाणं भवेत्.
अपरंच "कर्मोपास्तिस्तथाज्ञानं इति काण्डत्रयं क्रमात्"

"तद्रूपाष्टादशाध्याया गीताकाण्डत्रयात्मिका" इति बहुव्याख्यातृ सम्प्रतिपन्नाभियुक्तोक्तिश्चात्र प्रमाणं भवत्येव, श्लोकसंख्यायां तु सर्वेष्वपि भारतकोशेषु न केऽपि प्रतिजानते संख्याविप्रतिपत्तिं, सप्तैव श्लोकश-तानि अविप्रतिपन्नान्येव सर्वत्र उपलभ्यन्ते. प्रतिज्ञातश्चायमर्थः श्रीमद्भिः शंकरभगवत्पादाचार्यैः " तं धर्मं भगवता यथोपदिष्टं वेदव्यासःसर्वज्ञो भगवान् गीताख्यैः सप्तभिः श्लोकशतैः उपनिबबन्ध. " इत्यनेन भाष्य-ग्रन्थेन. अपि च. गीतायामर्थविशेषं व्याचक्षाणाः भगवच्चरणमतानुसा-रिणः मतान्तरानुसारिणः श्रीमद्रामानुजाचार्य वेदान्तदेशिक प्रभृतयो-वा नात्रश्लोकेषु आवापोद्वापपाठपरिवर्त्तनादिना विप्रतिपद्यमानादृश्यन्ते ॥ एवं च श्लोकसंख्यापि सर्वसंप्रतिपन्नैवेति न विद्मः कोवात्रहेतुः विप्रतिपत्ते-रिति. इतोप्यत्रानवकाशः पाठभेदशंकायाः. यदुतगुरुमुखादेव अधीयमाना ऽभूत्. उपनिषत्कल्पेति अस्मत्पूर्वतनैः. इदानीमप्युपलभ्यते ह्ययमा

स्सावित्र्याः, परमेष्ठी प्रजापतिः," इति. यद्यप्यस्त्येवशास्त्रं गायत्र्याः पादचतुष्टयवत्वे. तत्तूपयुज्यते जपादावुपासकानां. तच्चतान्त्रमेव, न श्रौतमित्यपि मन्यन्ते प्राञ्चः.

कु. तर्हिस्यादिदं समञ्जसं गीतायास्तथाविधत्व प्रतिपादनं च.

बा. किमिदं तुच्यते भवता. उक्तमेव हि मया तान्त्रमिति. तत् कथं उपनिषदर्थैकप्रतिपादनपरायां गीतायां पादविभागादिषु मूल भावं भजेत. सिद्धे खलु गायत्रीगीतयोर्मूलमूलिभावे, स्यादवकाशः पर्यालोचनस्यापि. तुरीयपादं प्रति. स एव अश्रुतचरः मूलमूलिभावः. निष्प्रमाणं प्रतिज्ञायत इति न किञ्चिदेतत् ॥ कथञ्चित्प्रसाध्यतां वा गीताया गायत्रीमूलकत्वं, नैतावताऽपि इष्टं सेत्स्यति, यतस्त्रिपदेव गायत्री त्रयीमूलतयाऽभ्युपगम्यते शास्त्रेषु. त्रयीचकर्म उपासना ज्ञानाख्य काण्डत्रयात्मिका, सद्गृह्य-तदर्थबोधिनी. गीताऽपि कर्मादि काण्डत्रयात्मिकेत्यस्माकमेवानुकूलं गायत्र्यागीतामूलत्व प्रसाधनं, आस्तांतावदिदं श्रुतिकाकाण्डपाद विप्रतिपत्तिः. ब्रूह्यन्यामपि.

कु. श्रूयतां इह खल्वध्यायाः षड्विंशतिः नाष्टादश.

बा. हन्ताऽत्रापि खलु त एव प्रमाणं शुद्धार्याः.

कु. न. सन्तिबहून्यत्र प्रमाणानि.

बा. कानितानि.

कु. प्रथमं तावत्. गोभिलकारिका. सा खलु षड्विंशतेरप्यध्या यानां प्रत्येकमर्थान् संगृह्य प्रतिपादयति.

बा. किमत्र माऽपिमुद्रिता कारिका.

कु. बाढं.

बा. तर्हि किञ्चित् पठतु भवान्.

कु. तथेति. "शुद्धधर्म मण्डलस्य धर्मशास्त्रं सनातनं"

१. यच्चगीताभिधं तद्धि व्याख्यास्यामो यथामति,

२. "श्रीकृष्णवदनांभोजगलिताऽशेषतापनुत्.
गीताचकास्ति षड्विंशदध्यायैरान्वितापरा.
"आद्येगीतावतारोऽयं. अध्यायेपरिकथ्यते

३. पूर्तिंसमेष्यति स्वात्तसंकल्पे कर्मचक्रतुः ॥"
"स्व प्रधानपरं शुद्धं नरनारायणौ प्रभू.

४. शुद्धसङ्कल्पनाथौ च तन्निबोधत वैजनाः ॥"
"प्रारब्धे भारतेयुद्धे कृष्णो नारायणो विभुः.

५. कार्यदर्शिनमाराध्यं नरं स्वांशं तथाऽर्जुनम्" ॥
"आहूयपूर्वं तां ब्राह्मीं शक्तिं तस्मै समादिशत्.

६. यां हि लोकास्तदीशाश्च प्राप्यस्वार्यप्रसादतः"
"व्यवसायं प्रकुर्वन्ति स्वकीयं सफलंभुवि.

७. द्विविधं च परा ब्राह्मी सा नाना परिकथ्यते" ॥
"सर्वेषां कर्मणां सैव जीवभूता चकास्ति हि

८. द्विधा भूतस्तयाशक्त्यानिवृत्तेश्च प्रवृत्तितः" ॥
"दैवीशक्तिं निवृत्तश्च प्रवृत्तश्चासुरीं तथा.

९. आदधानश्चपार्थोऽयं लोक प्रतिनिधिर्गुरुः ॥ "

" लोकानां च सुखंदुःखं सांसारिकमवेक्ष्यहि.

१०. कृपया परयाविष्टः शिष्यलक्षणलक्षितः " ॥

" जिज्ञासुस्तन्निवृत्तेश्च ह्युपायं योगशास्त्रतः.

शुद्धसंकल्पनाथं च कृष्णं तं शरणं ययौ ॥ "

इति. गीतार्थ संग्रहस्य चतुर्थे (4). पार्श्वेलिखितं पठति.

बा. अहो महती रचनाशक्तिः न क्वापि श्रुतचर्यारीतिः भवत्वर्थःकः.

कु. भवत्सकाशादेव श्रोतव्य इत्यागतोऽस्मि.

बा. तर्ह्यावयोरुभयोरपि सकण्ठग्रहं रोदनमेव शरणं. एतादृश्य एव खलु कारिकाः सर्वेषामध्यायानां.

कु. सन्तीतोऽपि सुन्दरतराः अपि पठानि.

बा. अलमलं मा पीडयकर्णौ किन्वस्याः कर्त्ताधूर्त्तः. किं वामूर्खः इदं हि शुद्धार्थमात्राभ्युपेतं प्रमाणं, सम्प्रतिपन्नश्चेदस्त्यन्यत्समीचीन प्रमाणं अध्यायविभागे, तदपिश्शृणुमः.

कु. इदं तावद्द्वितीयं.

" गीता गंगा च गायत्री गोविन्देति हृदिस्थिते

चतुर्गकारसंयुक्ते पुनर्जन्मनविद्यते ॥ "

इतीदं गीतासमनन्तराध्यायगतं भारतवचनम्.

बा. किमिदं वचनं भारतकोशेषु उपलभ्यते.

कु. दृश्यते परं क्वाचित् कोशेषु.

बा. भवतु कथमियमध्यायविभागे प्रमाणी भवति,

कु. अत्र हि यथा गंगागोविन्दपदानिस्सृता एवं गीतागायत्रीनिस्सृता, तदक्षरसङ्ख्याया चतुर्विंशत्यध्यायाश्चेति.

बा. किमयमर्थः तत्रैव उल्लेख्यः आहोस्वित् ग्रन्थकर्तुः.

कु. न क्वापि अत्रमामकोऽर्थः प्रतिपाद्यते. सर्वोऽयमाशयः ग्रन्थकर्तुरेव.

बा. श्लोकोऽयं कुत्र प्रकरणे दृश्यते ॥

कु. गीतायाः माहात्म्यप्रतिपादके प्रकरणे.

बा. तर्हियदि स्मृतिपथमेति पूर्वतनमप्यस्यश्लोकं ब्रूहि.

कु. सम्यगधराम्येव श्लोकान्. उच्यन्ते, श्रूयन्तां

"गीतासुगीता कर्तव्या किमन्यैः शास्त्रसंग्रहैः.
या स्वयं पद्मनाभस्य मुखपद्माद्विनिस्सृता."

"सर्वशास्त्रमयीगीता सर्वदेवमयोहरिः.
सर्वतीर्थमयीगंगा सर्ववेदमयोमनुः"

"गीतागंगाचगायत्रीगोविन्देति हृदिस्थिते.
चतुर्गकारसंयुक्ते पुनर्जन्मनविद्यते"

इति. भी. प. अ. 45. श्लो. 1. 2. 3.

बा. श्लोकाश्चेमेश्रुतचरा एव, भारतगता इति तु संशयामहे. यत्र क्वापिस्युरेवपुराणेषु. बहूनि खलु स्तुवन्ति भगवतीं गीतां पुराणानि. अत्र खल्वयमर्थो न प्रतीयते. यदुत गीता गायत्री मूलका चतुर्विंशत्यध्यायात्मिका चेति, परंतु गीतांगगादिवत् परम

पावनीत्येव लभ्यते. प्रकृतप्रशंसनाय प्रसिद्धानामितरेषां औप-म्याहाणां सहकथनं हि सांप्रदायिकं शास्त्रेषु. तत् कथं गीतायाः गायत्रीनि स्मृतत्वलाभः अध्यायादि सङ्ख्यालाभो वचनादस्मात् भवति. यत्किञ्चित् प्रलपितमेवेदं. अथापि कोलाभः साध्यते.

कृ. यथागायत्री चतुर्विंशत्यक्षरा एवं गीतापि चतुर्विंशत्यध्यायेति.

बा. अयिभोः. किमिदं अत्यन्त विप्रतिषिद्धमुच्यते.

कृ. कोऽयं विप्रतिषेधः.

बा. किं न बुध्यते प्रथमं तावद्गीतायाश्चतुष्पात्वकल्पने चतुष्पदागायत्रीगीताया मूलतया प्रतिज्ञाता. तथात्वेहि द्वात्रिंशदक्षरागायत्रीति द्वात्रिंशद्भिः अध्यायैः भाव्यं. त्रिपाद्गायत्रीमूलकत्वेतु पूर्वप्रतिज्ञाविरोधोदुष्परिहर एव. इह तु नोभयविधाऽपि अध्यायसंख्या.

कृ. स्यादयं भवदुक्तोविरोधः, उपोत्घातेतु अन्यथादृश्यते गायत्र्याः प्रतिपादं षडेवाक्षराणीति.

बा. किमत्र लिखितं प्रमाणं.

कृ. लिखितमेवात्र प्रमाणं पद्मपार्श्वे.

"गायत्री कामधेनु स्स्यात् स्तनं षट्कतुष्टयं"

"गीतामृतं महादुग्धं दोग्धा नारायणस्स्वयं"

"पार्थोदुग्धस्यभोक्ताऽस्तिलोक प्रतिनिधिर्नरः"

इतीदं नारदवचनं.

बा. इदं खलु शुद्धार्यकल्पितं नारदवचनं सम्प्रतिपन्नं चेदस्ति प्रमाणं उदाहर. किमिति भवान्धि प्रलम्भकवाक्यान्येव पुनःपुनरुदाहरसि.

कु. नैव किञ्चित् दृश्यते प्रमाणान्तरं. इह तु तदेव लिखितं ।

बा. ,तर्हि प्रमाणाभावादेव पराहतो गायत्रीगीतयोः मूलमूलिभावः, अथच गायत्री चतुर्विंशत्यक्षरा, तदक्षरसङ्ख्यामूला गीताच षड्विंशत्यध्यायेति अन्यदिदं वैदग्ध्यं निरूपकस्य ।

कु. उक्तैवात्र उपपत्तिः, प्रणवार्थनिरूपणपरं आद्यन्तयोरध्यायद्वयमिति ।

बा. गायत्रीमूलाया गीताया काप्रसक्ति. प्रणवार्थ प्रतिपादकाध्यायस्य

कु. न जप्यते खलु गायत्री विना प्रणवं ।

बा. तर्हि, सहैव जप्यन्ते व्याहृतयोऽपि नियमेन, तदर्थकाश्चाध्याया कथमत्र नयोज्यन्ते, अथवायोज्यन्ते कालान्तरे शुद्धार्यैः, शुद्धार्यै र्वान जाप्यन्ते व्याहृतयः सहगायत्र्या स्यात्किलशुद्धगायत्र्यप्यन्या तेषा, तदलमनेन कण्ठक्षोभेण, भवतु अन्यदुदाहर ।

कु. गोभिलनारदादिवचनव्यतिरेकेण नान्यदस्तिविस्पष्टं प्रमाणं, तानि च उच्यन्ते, श्रुत्वायथा तथा वा प्रतिपद्यतां भवान् ।

बा. किं तान्यपि श्रोतव्यानि वद तर्हि ।

कु. "पुराभगवता प्रोक्तायागीतायोगलक्षणा" इत्यारभ्य "इत्यध्याये च षड्विंशेस्तुतं ब्रह्मपरापरं" इत्यन्तानि उपोद्घातस्य त्रयोदशे पार्श्वेमुद्रितानि नारदवचनानि प्रथमचरमाध्याययोः तात्पर्यार्थान्प्रति पादयन्ति, तथा ।

"धर्मः प्रवृत्तिरूपश्च तत्वमत्र. प्रदृश्यते" इत्यादि ततोविद्या स्समस्ताश्चविज्ञेयास्तत्वलक्षणाः । चतुर्विंशतिभिर्भक्ताश्चेति संसारिभिस्सदा"

इत्यन्तानि द्वितीय पार्श्वेमुद्रितानि गोभिलभारतवचनानि च अविशेषेण सर्वासां विद्यानां साङ्ख्योक्त चतुर्विंशतितत्वार्थबोधनार्थतां तत्सङ्ख्यायुक्तताञ्च प्रतिपादयन्ति विस्पष्टं जाग्रत्येवोपोद्घाते । अथापि खलु भवान्नाद्रियते गोभिलादीनां वचनानि ।

बा. किंनुभोः कुमुदाकर, दोष स्स्यादयं यन्नारदादिवचनानि नाङ्गीकरोमीति. संप्रतिपन्नं खलु शास्त्रं प्रमाणतयोपन्यासमर्हतीत्युक्तमेव

खलु मयाप्राक्, तत् कथमत्यन्ताप्रसिद्धं अधुनैवकेनचित् अनधीत-शास्त्रेणेव विरचितं अपभ्रंशभूयिष्टं शशशृंगादिपदवदप्रसिद्धार्थकं शब्दमात्रशरीरकं वचनजातमवलम्ब्य बहोः कालात् साधुजनै राद्रियमाणां श्रीमतीं भगवद्गीतां अपलपितुं प्रभवामः, कथंवा नातिचिरप्रवृत्तामुन्मत्तप्रलापसदृशीं अर्थशून्यां गीतामाद्रियामहे, किञ्च, विद्यासु .चतुर्विंशतिसङ्ख्यायुक्तत्वं क वादृश्यते, यद्यपि पाण्डवचरित्रमात्रपरस्यभारतस्य श्रीमद्रामायणस्य च चतुर्विंशति सहस्रश्लोकवत्ता सुप्रसिद्धैव, नैतावता चतुर्विंशति सङ्ख्यायास्सर्वविद्याव्यापकतां रामायणभारतादीनाञ्च चतुर्विंशतितत्वप्रतिपादकतां वा महताऽपि क्लेशेन साधयितुमीशते सज्जनाः, अपिच, पाद्मादि पुराणप्रमितां गीताद्ध्यायगता मष्टादशसङ्ख्यामेव नितरामुपपत्ति मती मन्यामहे, सा खलु सङ्ख्याव्याप्तिमती विद्यासु,

कृ. कथमष्टादशसङ्ख्यायाविद्यासु व्याप्तिमत्वं.

बा. पश्यतु भवान्,प्रथमं तावत् विद्याएवाष्टादशसङ्ख्याकाः, तथाहि, चत्वारो वेदाः, षडङ्गानि, आयुर्वेदादयश्चत्वारः उपवेदाः, पुराणं, धर्मशास्त्रं, मीमांसा, न्यायश्चेति, किञ्च. पुराणान्यष्टादशैव, तावन्त्येवोपपुराणानि, महाभारतेऽप्यष्टादशैवपर्वाणि, तत्सारभूताप्यष्टादशाध्यायिन्येवगीतायुक्तिमती प्रमाणप्रमिताच, अतोऽत्रवयं किंप्रमाणमवलम्ब्यविप्रलम्भकवाक्यान्याद्रियामहे, तस्मादुपेक्ष्यगोभिलादिवचनजातं अन्यत् प्रमाणमस्तिचेदुदाहर ।

कृ. अस्त्यन्यदपि तृतीयपार्श्वमुद्रितं अनुगीतावचनजातं, तच्च ज्ञापकं प्रमाणमिति ग्रन्थकृन्मन्यते, वचनजातंतुतत्वानां चतुर्विंशतिमेव प्रतिपादयति, नगीतागतामध्यायसंख्यां स्मारयत्यपि ॥

बा. हन्त किमनेनायासेन, सर्वमेवप्रमाणीभवेत् जगत्प्रतारकस्य, विरम अस्मात्, मा वृथोन्मत्तप्रलपितैः कालं यापय, कापुनर्विप्रतिपत्तिः श्लोकसंख्यायां.

कु. पुराणी खलु गीता सप्तभि: श्लोकशतैः संम्मिता, इयं तु न तथा, पञ्चचत्वारिंशदधिकैः सप्तभिः श्लोकशतैः उपनिबद्धादृश्यते, अत्र च प्रमाणतया भारतीयं वचनमुपन्यस्यते.

“ षट्शतानिसविंशानिश्लोकानां प्राहकेशवः ”

“ अर्जुनः सप्तपञ्चाशत् सप्तषष्टिन्तुसञ्जयः ”

“ धृतराष्ट्रश्लोकमेकं गीतायामानमुच्यते ” इति, किमत्र भवान् प्रतिपद्यते.

वा. किमिदं वचनं सर्वेषु भारतकोशेषु उपलभ्यते.

कु. क्वचिदुपलभ्यते कोशेषु

बा. कुतूहलं खलु मे वर्धयसि, तत्कथय कुत्रकोशेषु किं कथमुपलभ्यत इति

कु. शृणोतुभवान् इदमत्रावधातव्यं, भारतगतं भीष्मपर्वहि सप्तदशोत्तर शताध्यायात्मकमार्गोदितिं प्रतीयते प्रमाणेन, इदमत्रप्रमाणं.

“ अध्यायानांशतंप्रोक्तं तथा सप्तदशाऽपरे, पञ्चश्लोकसहस्राणिसङ्ख्याष्टौशतानिच, श्लोकाश्चचतुराशीतिः अस्मिन्पर्वणिकीर्तिताः ”

“ व्यासेनवेदविदुषासंख्यातांभीष्मपर्वणि ”

इतीदमादिपर्वगतंवचनजातं (अ २. श्लो. २७३) कोशेषुकेषुचित् इदानीं मुद्रितेषु द्वाविंशत्युत्तरशताध्यायात्मकंभीष्मपर्व (१२२) दृश्यते विंशतिवत्सरेभ्यः प्राक्ग्रन्थालयाधीशगम्भोजिराजपुरमुद्रितेतुकोशे अष्टादशोत्तरशताध्यायात्मकंभीष्मपर्वोपलभ्यते, प्रतापचन्द्रराय मुद्रितेकलिकाताकोशेतु चतुर्विंशत्युत्तरशताध्यायात्मकमुपलभामहे, मतिश्चैवं यत्राष्टादशोत्तरशताध्यायाः तत्रकोशे प्रकृतगीतोपकार्यध्यायद्वयंनोपलभ्यते, यतस्तत्रलीलतादुर्गास्तुतिः, फलश्रुतिः, श्लोकसंख्याच, कलिकातापुस्तकेतु, अध्यायाधिक्येऽपिफलश्रुतिश्लोक सङ्ख्याप्रतिपादकाध्यायः परं नोपलभ्यते ॥ किंच समग्रंभारतं व्याचक्षाणेन नीलकण्ठसूरिणा तु फलश्रुति श्लोकसङ्ख्या प्रतिपादकश्लोक पञ्चकमात्रस्य प्राक्षिप्ततामुपन्यस्य व्याख्यानमुपेक्ष्यते येनाधिकपाठोऽपिभारते व्याख्यायत इतिप्रतिज्ञायतेसनत्सुजातीये । यथा.

" भाष्यकारादिभिः व्याख्यातान् सम्प्रतितनपुस्तकेषुचस्थितान् पाठान् श्लोकांश्च गुणोपसंहारन्यायेन एकीकृत्यव्याख्यायत" इति,

बा. तर्हीदंवचनजातंप्रक्षिप्तमित्येवप्रतीयतेविस्पष्टं. किमत्रप्रतिपत्तव्यं वक्तव्यंवा, सर्वभाष्यकृत्सम्मत संख्ययाविरुद्धेयं संख्येत्येव उपेक्षणीया, यच्चेदंप्रमाणमुपन्यस्तंभारतवचनं, तदपित्वयैवप्रत्युक्तप्रायं, अथापि. इदमत्रशोकस्थानं, "यदिह साहसिकस्यसार्क्षीभवन्ब्रह्महेव" प्रतारकवाक्यस्यप्रक्षिप्तंवाक्यान्तरमपि उपकरोतीति. अपितत्रनामसंवदतिश्लोकसंख्या, यत्रैवोपलभ्यते प्रक्षिप्तमिदंवाक्यंकोशेषु.

कु. कोऽयंप्रश्नः प्रतिज्ञायत एवहिशुद्धधर्ममण्डलव्यतिरेकेणनक्वाप्यस्ति शुद्धागीतेति.

बा. सखेमाकुप्य,इदमन्यत् किञ्चित्कथय अत्रापिनामशुद्धगीतायांप्रक्षिप्तवचनार्थसंवादः समुपलभ्यते ॥

कु. आ.

बा. किमिदंपर्यालोच्यतइव, किमिदंनविमृष्टंभवता.

कु. कथं न विमृष्टं, विमृष्टमेव,अत्रहिवचनस्यसंवादो विसंवादश्चेति उभयमपिप्रतीमः ॥

बा. किमिदंविरुद्धमभिधीयते, कथयविस्पष्टं.

कु. कथ्यतेतावत्, अत्रहिप्रमाणवचनप्रकृतगीतयोः आहत्य श्लोकसंख्यायां ७४५ इत्यत्रसंप्रतिपत्तिरेव, केशवादिपुरुषभेदेननिर्दिष्टसंख्यायांतु विप्रतिप्रत्तिरेव, तथाहि, प्रमाणवचनेह्येवंप्रतीयते ॥

| | वाक्यप्रमितासङ्ख्या | | | उन्मत्तगीताश्लोकसङ्ख्या |
|---|---|---|---|---|
| भगवत्प्रोक्ताः श्लोकाः | 620 | ... | ... | 608 |
| अर्जुनप्रोक्ताः— | 57 | ... | ... | 69 |
| संजयप्रोक्ताः | 67 | ... | ... | 41½ |

| | | | | |
|---|---|---|---|---|
| धृतराष्ट्रोक्ता | 1 | .. | .. | 1 |
| आहत्य | 745 | . | .. | |

| | | |
|---|---|---|
| दुर्योधनोक्ता. | ... | 3 |
| भीष्मोक्ता. | ... | 2 |
| दुर्गाप्रोक्ता. | .. | 1½ |
| ब्रह्मस्तुतिः | ... | 19 |
| आहत्य | ... | 745 |

बा. हन्तभो. सत्यामेवंमहत्यांविप्रतिपत्तौ प्रक्षिप्तवचनस्य प्रतारकगीता कथंलक्षीकरोषि.

कु. नाहंलक्षीकरोमि, लिखितंपरमनुवदामि ।

बा. सर्माचीनोऽयंलोकप्रतारणप्रकार . किमियानेव विप्रलापः श्लोकसङ्ख्यायां ।

कु. अन्यदप्यस्ति, उपोद्धातस्य षष्ठपार्श्वगतं नारदीयं वचनं ।

बा. कोऽयं नारद .

कु. य· शुद्धार्यैः स्वोपदेष्टृसिद्धतयाव्यवह्रियते

बा. तद्यवगम्यते हंसादिष्वन्तर्गत, इति बृंहितावद्वचनगतं विशेषं.

कु. षट्सप्तत्युत्तरंपञ्चशतं प्राह सर्योगिराट ''

'' श्लोकानांचैव गीताभिः चतुर्विंशतिभि. पर. ''

इत्यनेन वचनेन प्रकृतगीतायाः षटसप्तत्युत्तरपञ्चशतश्लोकात्मकत्वं ५७६–प्रतीयते, उपोद्धातकृतातु अष्टादशे पार्श्वे वचनमिदमेवं व्याख्यायते

'' श्रीभगवद्गीतायामस्यां श्रीकृष्णमूर्त्तिना अशोच्या नन्वशोचस्त्वं- इत्यारभ्य मोक्षयिष्यामिमाशुचः'' इत्यन्तैः षटसप्तत्युत्तर पञ्चशतैश्चश्लोकैः प्रतिपादिताभवन्तीति विज्ञेयं '' इत्यनेन वाक्येन, अत्रतुग्रन्थकृन्निर्दिष्टस्थाने ६१२ श्लोकाउपलभ्यन्ते ।

बा. **किमिदमन्यदन्यदसंबद्ध मुच्यते अथवा इदमेव हि लक्षणं उन्मत्त कस्य उन्मादस्य. तिष्ठत्विदं, अन्यत्किञ्चित् पृच्छामि, प्रमाणतयोपन्यस्य**

मानेषुनारदादिवचनेषु उपोद्धातकृद्वाक्येषुच किं उपलभ्यते कर्त्रभेद-ज्ञापकं लिङ्गं

कु. सन्त्येव लिङ्गानि, अथापि कथं निश्चीयेत कर्त्रैक्यं.

बा. मा नामनिश्चीयतां, ब्रूहि तावल्लिङ्गानि.

कु. प्रथमं तावदिदं यच्छ्लोकेषु वाक्येषु च बहुत्रोपलभ्यन्तो

"पूर्वसूरिणः" इति अश्रुतचरंनान्तं सूरिपदं, द्वितीयंतु "कृष्ण मूर्तिना" इति पूर्वतनप्रयोगेष्वदृष्टचरेण ग्राम्यजनमात्रेश्रूयमाणेन कृष्ण मूर्तिपदेन भगवतोर्निर्देशः एवमन्यान्यप्युपलभ्येरन् अन्विष्यमाणानि ।

बा. मातावत् तव निश्चयोऽस्तुकर्त्रैक्ये, अहं पुनरेवं मन्ये, नारदो गोभिलः इत्यादीनि सर्वाणिकलेरेव कार्यभेदोपाधिकानि नामान्तराणीति ।

कु. तर्हि भवन्मतादन्यत् मन्मतमिति मा कदाचिन्मन्यतां भवान्

बा. भवत्विदं, कथासन्दर्भविशेषं तावत् शृणुमः किंचित्, तत्ब्रूहि प्रथमाध्यायकथां.

कु. शृणोतुतावदवहितोभवान्, प्रथमं दुर्योधनः द्रोणाचार्यमुपगम्य स्वपर सेनयोः बलाबलमभिधाय भीष्मरक्षणं प्रार्थयते भीष्मस्तुतदानीं सन्धिमुपदिशन्नेव युद्धायप्रारभत, ततः सर्वे स्वान् स्वान् शङ्खान् दध्मुः ततः सङ्कल्पनाथस्य उपदेशात् अन्यः सङ्कल्पनाथः दुर्गात्रयो दशभिः श्लोकैरस्तौषीत्.

बा. कावेतौ सङ्कल्पनाथौ.

कु. इदं तावद्रहस्य मवगच्छतु भवान् संकल्पनाथाविति भगवतो नर-नारायणावतारभूतयोः कृष्णार्जुनयोः संज्ञा, साच शुद्धार्यमण्डले-प्रसिद्धा.

बा. किमत्रसंज्ञायां प्रवृत्तिनिमित्तम्.

कु. त एव खलुप्रष्टव्याः ये तत्र समवेतास्स्युः, अथवा विस्पष्टमेवेदं यच्छुद्धार्याणां संकल्पएवेति

बा. भवतुचित्रतरमिदं नामकरणं भगवतो नरनारायणयोः, कथाशेषं ब्रवीतुभवान्.

कृ. ततः प्रसन्नादेवीदुर्गा प्रादाद् वरमर्जुनाय, अर्जुनश्च केशवेनसाकं सेना-मध्यमगात् तत्र च भीष्मादीन बान्धवानवलोक्य विषादमभजत् निर्विण्णश्चवैक्लव्यं प्रादर्शयत वचनैः. इयमेव कथाप्रथमाध्यायस्य.

बा. अहो रमणीयतरा सन्दर्भशैली कथायाः· किमवल्पाः श्लोकाः केचि-दुपलभ्यन्ते पुराणगीतायां.

कृ. किमेवं पृच्छतिभवान् सैवाकिलेयं गीता यापार्थाय संकल्पनाथेनोप-दिष्टा. अत्राहि शुद्धार्यगातायां प्रथमेऽध्याये श्लोकाः चतुष्पञ्चाशत् ५४. पुराण्यांतु षट्चत्वारिंशदेव ४६. उभयोः साधारणाः श्लोकाः त्रिंशत् ३०. शुद्धायांतु अधिकाः चतुर्विंशतिः २४. ते च पुरा-ण्यांनक्काप्युपलभ्यन्ते. साधारणेष्वपि श्लोकेषु अपूर्व एव क्रमः प्रमे-यानुसारात्.

बा. को नामासौ प्रमेयः.

कृ. प्रमेयं खलु एवं प्रतिजानाति उपोद्घाते "द्वादशादिके पार्श्वत्रये," प्रथमेऽध्याये ज्ञानाधिकारसिद्धयर्थं देव्याः शक्तेः स्वीकारपूर्वं गुरूप-सदनं, द्वितीयादिभिः यथाक्रमं गायत्र्यर्थभूतानां चतुर्विंशतेस्तत्वा-नांक्रमात् प्रतिपादनं, चरमेत्वध्याये परब्रह्मस्तुतिः.

बा. अथ किमेते प्रमेयभूतार्थाः तत्र प्रतीयन्ते.

कृ. उक्तमेव तावदुपोद्घातात् प्रतीयन्त इति· गीतापठनेन तु प्रमेयार्था-नवगन्तुं वर्षशतेनापि न प्रभवन्त्याधुनिकाः पण्डितप्रकाण्डा अपि, तत् खलुज्ञानं शुद्धार्यप्रसादैकलभ्यं

बा. तर्ह्युपासतां पण्डिताः शुद्धार्यान्. येषामेवात्रजायते जिज्ञासा, किमेव-मन्येष्वपि अध्यायेषु दृश्यन्ते केचिद्हीनाश्लोकाः ॥

कृ. दृश्यन्त एवात्रगीताश्लोकाः, आनुपूर्वीत्वपूर्वैव **प्रथमाध्यायवत्**, अत्र हि समग्रायां गीतायां पुराण्यामनुपलभ्यमानाः श्लोकाः षडशीतिरेव, ४६–तेचश्लोकाभारतादुद्धृता इति ग्रन्थकृदेव प्रतिजानाति, पुराणगीतातः त्यक्तास्तु श्लोकाः एक चत्वारिंशदेव ४१–अस्त्यन्योप्यत्र विशेषः, अत्र हि द्वितीये अध्याये चतुर्थमारभ्य श्लोकं यावत् पञ्चविंशं द्वाविंशति २२–श्लोकाः आनुशासनिकपर्वगतात् त्रिचत्वारिंशत्तमात् ४३ अध्यायात् उपात्तादृश्यन्ते, अभ्युपेतश्चायमर्थो ग्रन्थकृता. तत्रह्यध्याये श्रीमतानारायणेन गरुडाय श्लोकानां सप्तत्या स्वात्मतत्वमुपदिश्यते, ततश्चायं ग्रन्थकृदुपादत्त द्वाविंशति २२–मेवश्लोकान्. क्रमश्चात्र तत्रत्योनापेक्षितः श्लोकाश्चकेचन संस्कृतादृश्यन्ते यथा "अत्र गीतायां द्वितीयाध्यायस्य "तत्तुमेपरमंगुह्यं येन व्याप्तमिदं जगत् ॥"

"मनोबुद्धिगतः श्रेयः विदधामि**विहंगम**" इत्यत्र प्रकृतानु गुण्यार्थ **नरर्षभेति** परिवर्त्तितंपदं

२. "मांतु ज्ञातुं कृतावुद्धिः भवता **पक्षिसत्तम**" इत्यत्र**मानवोत्तमे**ति परिवर्त्तितं पदं

३. "तदाहं धर्मवृद्ध्यर्थं मूर्त्तिमान् भवि**ताशुग**" इत्यत्र भ**विता नघ** इति च परिवर्त्तितं ॥

बा. नहीदं पदपरिवर्त्तनादिकं असुकरं लोकप्रतारकाणां. कांवागति मनु भविष्यति भारताख्यमितिहासरत्नं अनेनाक्रम्यमाणमिति सकम्पंदुःखायते मे हृदयं. आस्तामिदं अथकीदृशी रचनानुपूर्वी

कृ. इदमिहवक्तुं शक्यं, इह सर्वेष्वप्यध्यायेषु प्रायः प्रतीयमानाः श्लोकाः भगवद्गीताश्लोका एवेति, अथापि किंचिदुपकृतं ग्रन्थकृता

बा. अथ कोऽयमुपकारः

कृ. अत्रत्यानां श्लोकानां भगवद्गीतायां प्रातिस्विकस्थानानि विस्पष्टं प्रदर्शितानि शतादनन्तरेषु पञ्चदशसु १५. पार्श्वेषु

बा. किमिदमार्जवप्रदर्शनं, अथवा गीताविध्वंसन प्रतापप्रकटनंकलेः ।

कु. उभयमपीदंस्यात् पुरुषविशेषापेक्षया । आर्जव प्रदर्शनमेवेदं शुद्धार्यापेक्षया : अन्यदेवान्यजनापेक्षया ।

बा. किमियं श्लोकश एव उद्धृत्य संदग्धागीता, उताहो अर्द्धशः पादशोऽपि।

कु. नक्वचिदर्धशः पादशोवा खण्डीकृत्य योजनमुपलभामहे श्लोकानाम् ।

बा· अहो महती दया गीताश्लोकेषु. अथवा किमत्रदया " घुणाक्षरनयेनाप्ययमर्थ. संवृत्त स्यात्, यदुतश्लोका· खण्डशोऽपि वियोजिता नाभुवन्निति । सर्वथाप्यत्रनिदानंस्यादायुष्मत्तैव गीताश्लोकानाम् ॥ आस्तामिदम्। कंपुनस्समयमनुवर्तते गीतैषा ।

कु. न कश्चिदनुवर्तते समयं वैदिकमन्यं वा लोकप्रसिद्धम्.

बा. तर्हि स्यात् निर्विषयेयं गीता, स्यादेवहि कश्चित् स्वविवक्षितः समयः शास्त्रस्य.

कु. सत्यं, अस्त्येव सनातनधर्माख्यो विवक्षितः समयः सर्वसमयमूलभूत· उपोद्धातस्य समस्त पार्श्वे निर्दिष्टः.

बा. सकीदृशः.

कु. यथाकालं यथादेशं परिग्रहपरित्यागौ धर्माणां, प्रमाणीकरणं च शुद्धार्याणां तत्कृतशास्त्राणाच.

बा. अस्त्विदं. सिद्धा. खलु आदेष्टारः शास्त्राणां शुद्धानां, कुत्रते प्रतिवसन्ति सिद्धा., कानिचतानि शास्त्राणि.

कु. हन्तकिमेतदपि नवेत्ति भवान्, ते खलु अशीर्णपर्णं नाम वटमधिवसन्ति.

बा. कोऽसावशीर्णपर्णोनाम वटः.

कु. कथं सुप्रसिद्धोऽप्ययं न ज्ञायते भवता, स खलु तज्जदेशे शाल्मिक्षळप्रान्ते वर्त्तत इति श्रूयते.

बा. किमस्य वटस्य नाम्नः प्रवृत्तिनिमित्तम्.

कु. नशीर्यन्ते अस्यपर्णानीत्येव.

बा. किमयं भूतार्थः.

कु. वदन्त्येवं शुद्धधर्ममण्डलसमवेताः शुद्धदासाः.

बा. तर्ह्येतदपि तथ्यमेव. किंच मुनयोऽपि वटमधिवसन्तीति अद्भुतमिदं, अथवा स्यादेवेदं, सन्त्येव खलु मुनिनामानो ब्रह्मराक्षसाः, ते च नियतं वटेष्वेव वसन्तीति सुप्रसिद्धमेवेदम्. भवतु शास्त्राणि तावत् ब्रवीतु भवान्.

कु. नेदानीं तानि संख्यातुं शक्यन्ते, इदानीं प्रकटीकृतास्तु ग्रन्थाः प्रणववादप्रभृतयः चत्वार एवोपलभ्यन्ते, तत्रायं गीताग्रन्थः तर्त्तीयीकः, अथापि इदमत्र किंचित् जानीमः, अस्ति शुद्धं महाभारतं, शुद्धं च रामायणं, शुद्धावेदाः, शुद्धानि च पुराणानि, शुद्धाः स्मृतयः, शुद्धं भाष्यं, इत्यादि सर्वाणिचैतानि शुद्धधर्ममण्डलग्रन्थावल्यां क्रमात् प्राकट्यं नेष्यन्ते.

बा. ननु वक्तव्यं उन्मत्तप्रलापावल्यामिति, तत्रेयमुन्मत्तगीता इदानीं प्रादुरभूत्, आस्तामिदं, अन्यत् किंचित् पृच्छामि. इयं हि गीता शुद्धधर्ममण्डलग्रन्थावल्यां तृतीयेत्युच्यते, अथ किन्नामकानि मुद्रितानि ग्रन्थान्तराणि.

कु. हन्त तदपि वक्तव्यमेव. शृणु तावत्. तत्रहि गर्ग्यायणमुनिप्रणीतः प्रणववादः योगानन्दविरचिता तदर्थिका च कारिका इति प्रथमो-ग्रन्थः, भगवन्नारायणविरचिता योगदीपिका द्वितीयः , भगवद्गीता गोभिलकारिकाचेति तृतीयः विभागः. अनुष्ठानचन्द्रिकाऽपरनामिका हंसयोगिविरचिता सनातनधर्मदीपिका चतुर्थः, इत्येतावदिदानीं उपलभ्यते.

बा. हन्तहन्तायमद्भुततमोविलासः कलेः, यदश्रुतचराः प्रकटीभवन्ति ग्रन्थाः, भवतु किमत्र येकेचनगीताव्यतिरिक्ताः त्वया दृष्टाः ग्रन्थाः.

कु. प्रणववादः परं क्वचित् क्वचित् दृष्टः.

बा. अथ कोऽसौ प्रणववादोनाम.

कु. प्रणववादोनाम कश्चित् संस्कृतग्रन्थः.

बा. किमयं पद्यात्मकः, उत गद्यात्मकः.

कु. नतावन्मया निश्चेतुं शक्यते.

बा. तत्कथं ननिश्चीयते दृष्ट्वापि.

कु. तत्र हि क्वचित् ऋच इव प्रतीयन्ते, क्वचिद्यजूंषीव, क्वचित् सामरूपेणापिगातुं शक्यन्त इव, क्वचिदुपलभ्यन्ते पद्यानीव, अथाप्येतावदिहशक्यं वक्तुं, ग्रन्थोऽयं सर्वथा संकृताक्षरमयएव, बहून्युपलभ्यन्ते संकृतभाषापदान्यपि ।

बा. अस्त्विदं, ग्रन्थस्य प्रतिपाद्योऽर्थः कः

कु. रौप्यकत्रयम् ३.

बा. नाहमिदानीं मूल्यं पृच्छामि, ग्रन्थकर्तुः तात्पर्यविषयमर्थं पृच्छामि.

कु. नान्यः प्रतीयते मदुक्तार्थात् ।

बा. मातावत् परिहस. स्यात् किल यः कश्चित् तात्पर्यविषयोग्रन्थस्य.

कु. कोवा शक्नुयात् पूर्ववर्णितप्रकाराणामक्षरसमुदायानामर्थान्वक्तुं, अथचेत् भवतोनिर्बन्धः तर्हि शुद्धार्यानुपसद्य तत्प्रसादलब्धानर्थान् कालान्तरे वक्ष्यामि.

बा. शिव शिव शिव विस्मयनीयोऽयं हि कलेर्विलासः. आस्तांतावदिदम्. प्रादुर्भविष्यन्ति च क्रमात् उन्मनभारतादीनि. हन्तहन्त महाभाग्यमिदं कलिमानुषाणां. अन्यदपिकिञ्चित् पृच्छयते, इदं हि सूच्यते

भवता प्रतिपदं शुद्धार्योपसदनेनैव तद्ग्रन्थार्थो ज्ञातव्या इति, अथ-कोऽसावुपसत्तव्यः शुद्धधर्मसमयाचार्यः, अपित्वया ज्ञायते श्रूयते वा.

कु. बाढंज्ञायते नामतः ; नतुव्यक्तितः.

बा. तर्हिकिन्नामासौ ।

कु. अत्रैवगीतारंभे सूच्यते गुरुशिष्य प्रश्नोत्तररूपेण "सुब्रह्मण्यमहाभाग नमस्ते लोकनायक. कथंयोग ब्रह्म विद्यागीताध्येयामनीषिणा" सङ्कल्पनायकंचैव प्रणमेत् भक्तिभावतः" इत्यन्तेन श्लोकषट्केन.

बा. कथमत्रावगम्यते गुरुः.

कु. अस्ति सुब्रह्मण्यनामा संसारनायकः सर्वेषां शुद्धमण्डलदासानां उपसत्तव्योगुरुः, तदुपसदनेनैव दीक्षापूर्वं श्रोतव्यो रहस्यार्थ इति अन्यतोऽप्यवगम्यते ग्रन्थात्.

बा. व्यक्तितः किल न विज्ञायते सदाचार्यः, भाग्यहानिरेवेदमस्माकम्. भवतु किमिदं संसारनायकत्वं, कश्चोपसदनप्रकारः.

कु. तदपिकिञ्चिदिवश्रुतं संगृह्योच्यते सन्तिपञ्चसंसाराः शुद्धार्य समयेन. तत्रच पञ्चम एव परम. संसारोमुक्तप्राप्यः, यत्रैव पुरुषोनाम परमेश्वरो वसति, यत्सामीप्यमेव परमामुक्तिरभिधीयते शुद्धार्यैः, अवाक्तनास्तु चत्वारः संसाराः मुमुक्षूणा व्यवसायस्थानानि, व्यवसायश्च तत्तत्संसारनायकोपदिष्टधर्मानुवर्त्तनात् नान्यः, ते च संसाराः क्रमप्राप्या एव व्यवसायिभिः, तेषु च प्रथमोऽयं संसार: योऽयमस्माभि रध्युष्यते लोकः ; अस्यैव संसारस्य नायकः सुब्रह्मण्यनामा महापुरुषः शुद्धाचार्य पदवीमधितिष्ठतीति, स च नवग्राहपञ्चग्राहादि प्रतिज्ञाविशेषपूर्वकं उपसत्तव्य इत्यपिश्रूयते.

बा. अथ के नाम ग्राहाः.

कु. ग्राहानाम प्रतिज्ञाविशेषाएव, तेऽपि पूर्वसिद्ध वर्णाश्रमधर्मत्यागादि·

बा. हन्तभोः श्रुतंसर्वं, श्वः परश्वोवा, निगरिष्यति कलिः लोकान्.

आस्तांतावदिदं. अयमत्रावगम्यते सुनिर्णीतोऽर्थः. तथाहि पुराणी गीता जम्बुकब्राह्मणदूषिता, तद्रहस्यमविज्ञायैव शंकरभगवत्पादादयः प्रमोषमापन्नाः, इयमेव गीता, येयं षड्विंशत्या अध्यायैः परिमिता. अस्याश्च पादाश्चत्वारः· तेषां च नामानि ज्ञानसंकल्प कर्मयोगा इति क्रमात्. अस्याश्च चतुष्पात्वे मूलं गायत्र्याः चतुष्पात्वमेव· तत्र च प्रमाणं शुद्धार्या एव. यतो-गायत्री त्रिपदेति बहुत्रश्रूयते, अध्यायाश्च षड्विंशतिः. तत्र कारणं गायत्री-प्रतिपाद्यानां चतुर्विंशतेस्तत्वानां परस्याः शक्तेः परब्रह्मणश्चेति षड्विंशतेः प्रतिपाद्यानां विभागः प्रथमम् ॥ द्वितीयंच गोभिलकारिकायां षड्विंशतेर-ध्यायानां विभज्यतात्पर्यकथनं, श्लोकाश्च पञ्चचत्वारिंशदधिकानि सप्त-शतानि, अत्र पुराणगीताश्लोकाः ५५९–अवशिष्टास्तु प्रायशोभारतगता एव. गीताचेयं सनातनधर्माख्यमेव समयं प्रतिपादयति, स च न कुत्रचित् समये-ष्वन्तर्भवति. निर्दिष्टप्रमेयार्थानां ग्रन्थस्यच प्रतिपाद्यप्रतिपादकभाव· शुद्धा-र्यैकगम्यः, नात्राधिकारः पण्डितानां पठनपाठनादौ. यतोऽत्र पाश्चात्यसुकवि-प्रणीतं अव्यभिचरितमुपलभ्यते आत्मतत्वशास्त्रसामान्यलक्षणम्.

कु. सखे किं तल्लक्षणं पाश्चात्यकविप्रणीतं शास्त्रजातस्य.

बा. किं न विज्ञातं भवता. श्रृणु इदं तत्. अतीन्द्रियार्थविषयकत्वेसति परस्पराऽविज्ञातार्थक पूर्वोत्तर पक्षवादि वचनरूपत्वं. लक्षणमिदमन्य-त्र यथातथावा भवतु, इहत्वव्यभिचरितमेवेदम्. इयं हि गीता तार्त्ती-यीकी शुद्धार्यमण्डलनिर्गतानां कृतीनाम्. एतदर्थानुवादिनी गोभिल-कारिकाचात्रसंश्लेषिता, क्रमाच्चैष्यन्ति भारताद्याः कृतयः, कृतीनां दातारस्तु हंसयोगिप्रभृतयः सिद्धपुरुषाः, ते चाधिवसन्ति यक्षरक्षः-पिशाचालयं अशीर्णपर्ण नाम वटं, अथ वाकुत्रते गच्छेयुः सजातीयान् हित्वा, न्याय्योहि निर्दिष्टोवास·, वताहो सर्वोऽपिखल्वयं विलासः कले-रेव· सम्यगेवेदं कृतवान् कलिः. यत्सर्वावयव विछेदपिण्डीभावेन गीतां कीचक मारममारयत्. न्याय्यं चेदं गीतामारणं कलेः. इयं खलु दुर्यो-

धनरूपेण अवतीर्णस्यकलेः मूलोच्छेदनाय निःसृता भगवन्मुखात्· साधु भोकले साधु. सम्यगेवेदमुपक्रान्तं भवता गीतायम्. इयं हि गीता द्रौपदीव पाण्डवेषु द्विजातिष्वेवासीन् क्वचित् गूढचारीणी. यतः प्राक् भारत प्रवचनपरैरपि न सभायां श्राविता आसीत् श्रोतव्येयं गुरुमुखात् उपसत्तिपूर्वकं अधिकृतैरेवेति. सैवेदानीमानीता कुतश्चित् कालात् सभां द्रौपदीव. आपादिताच धूर्तजनकर्णगोचरतां. साहि वस्त्रापकर्षणेनेव भाषान्तरेण विपरिणम्यमानापि न तत्वतोऽवालोक्यत. यथैव पाञ्चालीं भगवत् प्रसादोत्थैः मायावसनैः परिधीयमाना. एवमपि हि नपर्यभूयतात्यन्तम्. दुरन्तानिहि मायापरिधानानि अनधिकृतानाम्. अत एव खलु अयं ते मारणोद्योगः. यथेष्टं चेष्टतां भवान् ईप्सितंतु ते न सेत्स्यति· सा खलु कृष्णदुहिता. सहि तवैव अनर्थाय तां पुष्णीयात् कृपानिधिः, नहि त्वामुपेक्षनेस्म धार्मिकस्य धृतराष्ट्रस्यापेक्षयापि. विफलाः किलाभवन् त्वदनुवर्त्तनात् नैसर्गिकाः सदुपदेशजन्याश्च गुणाः धृतराष्ट्रस्य· नह्यसौ भगवद्गीतात्वत्कृतेन गीताभासेन बाध्येत. यद्येनेन प्रतार्येरन् केचिन्मन्दप्रज्ञा· प्रतार्यन्तां कामम्· नैतावताबाधः सज्जनेषु कृतप्रतिष्ठायाः भगवत्या. गीतायाः. सखेकुमुदाकर मागाविषादम्· जागर्त्येव भगवान् पार्थसूतः. सज्जनापेक्षयापि परिरक्षेत् दुहितरं गीतांनाम. यद्यप्ययंकालः कलेरेव. अथापि नास्मैप्रसीदेत् धृतराष्ट्रस्यापेक्षयापि, सहि न सहते धर्मग्लानि अभ्युत्थितिमधर्मस्य वा, प्रत्यश्रौषीत् खलु भगवान् पार्थाय.

"यदायदाहि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥"

इति. अस्त्विदमन्यदपि खलु प्रष्टव्यं. किमियमुन्मत्तगीता क्वचित् प्रोच्यते.

कु. प्रोच्यत एव. चेन्ननगरोपान्तवर्त्ति पुरशपाकस्थायां सभायां प्रत्यादि-

बा अहो दाक्ष्यं कले, सदृशमेव हि स्थानं निरदिक्षत् प्रवचनस्य.

कु. किमिदं दाक्ष्यम्. किं वासादृश्यं स्थानस्य.

बा. हन्तकिमिदं न विज्ञातं भवता. तत्रैव खलु सन्निदधते श्रवणाधिकृताः सुमतयः. येषां प्रतिक्षणं नवनवमुन्मिषन्ति विचित्रतराःप्रज्ञाः तथा-विधा वाग्विलासाश्च.

कु. नैतावतापिज्ञायते भोः.

बा. किम्भिदं तवापि दुर्ज्ञेयं, तदासन्नदेश एव हि निर्मितामहती शाला विचित्रप्रज्ञानां सहृदयानाम्.

कु. अयिभोः ज्ञातमिदं उन्मत्तशालामधिकृत्य ब्रूषे, तर्हि उपपन्नमेवेदं ब्रूषे. अतः खलु त्वां प्रष्टुमागतोऽस्मि चिदम्बरक्षत्रम्.

बा. अलमेतावताकलिविलासकथाप्रसङ्गेन. उपासीदति हि भगवती पश्चिमा सन्ध्या. श्रूयते च भगवत. सन्ध्यानटस्य नटनोत्सवारम्भ-कोलाहल विमिश्रो महाघण्टानादः. तर्हि सन्ध्यामन्वास्य तस्यैव भगवद्गीतातात्पर्यविषयस्य करुणापयःपयोनिधेः चित्सभानटस्य सकलकलिवार्त्ताश्रवणजन्यकल्मषापहं नटनोत्सवमेव सेवावहे.

कु तर्हीदंपुस्तकम्.

बा. दीयतां दीयतामिदम्. पत्रंहीदमुपयुज्येत भक्तजनानां प्रसादरक्षाप्रेषा-णाय, पत्रजातं खलु इदानीं दुर्लभतरमभूत् अदृष्टाऽश्रुतचरेण महता पाश्चात्ययुद्धविजृम्भितेन.

कु. सखेकिमुच्यते पत्रजातं दुर्लभमभूदिति. सर्वं हि वस्तुजातं अभूत् दुर्लभतरं. कष्टस्य काष्ठामदूरवर्त्तिनीमुत्प्रेक्षन्ते कुशलाः. नाद्याऽपिहि श्रूयते शमवार्त्ता पत्रिकासु, किंवाकुर्मः ।

बा. सखेमा भैषीः. एहि प्रार्थयावहे नित्यसुखरूपमानन्दनटमम्बिकासखम्. सहिसेवितो नियतं विदध्यादस्माकंभारतीयानां धर्मैकतानहृदयस्य अस्मत्जार्ज् सार्वभौमस्य च निखिलमेवमङ्गळजातम् ॥

**ओम् तत् सत्**

---

THE MODERN PRINTING WORKS, MOUNT ROAD, MADRAS.